# मिलिये सुपरफ़ाइटर्स से!






मैदान पर सुनील गावस्कर की रग-रग में फड़कता है मुकाबले का जोश.

तभी तो दुनिया उन्हे 'सुपरबैट्समैन' कह कर पुकारती है. पर सुनील गावस्कर कहते हैं - "मैं तो सुपरफ़ाइटर हूँ और मैं अपने बेटे को भी बनाऊँगा सुपरफ़ाइटर. तभी तो मैं उसे बचपन से ही सही दाँव-पेंच सिखा रहा हूँ. जैसे दाँतों की देखभाल के लिये फोरहॅन्स फ़्लोराइड—सड़न के खिलाफ़ सुपरफ़ाइटर."

कीटाणु भोजन के कणों पर असर करते हैं और ऐसे एसिड पैदा करते हैं, जिनसे सड़न शुरू होती है. फोरहॅन्स के सुपरफ़ाइटर में असरकारक फ्लोराइड है जो दाँतों का इनेमल मज़बूत करके एसिड के हमले को रोकता है.

और फोरहॅन्स का अनोखा एस्ट्रिंजेंट मसूड़ों को कस कर दाँतों को मज़बूत आधार देता है, बरसों बरकरार रहने के लिये.

सुनील साहब और कुछ?

"मैं अपने बेटे को देता हूँ फोरहॅन्स सुरक्षा. आप?"




GM-113/86 Hn.

# योग्यता

कवयः कालिदासाद्याः
कवयो वयमप्यमी।
पर्वते परमाणौ च
पदार्थत्वं प्रतिष्ठितम्।।

उन्नतः विशालः पर्वतः अपि द्रव्यम्। दर्शनायोग्यः परमाणुः अपि द्रव्यम्। कालिदासः कविः, यतः सः श्लोकात्मकं काव्यं रचितवान्। अहम् अपि कविः एव, यतः कांश्चन श्लोकान् निर्मितवान् अस्मि। किन्तु महाकविः कालिदासः क्व? श्लोकरचनाभ्यासी अहं क्व? यथा द्रव्यत्वेन साम्ये सत्यपि पर्वतपरमाण्वोः भेदः सुप्रसिद्धः, तद्वत् एव मम कालिदासस्य च" इति वदन् कश्चित् कविः विनयं प्रदर्शयति।

कालिदासः कविकुलगुरुः, काव्ये सिद्धहस्तः च। तस्य वाचम् अर्थः अनुधावति। तादृशं वैशिष्ट्यं प्राप्तुं 'योग्यता' अपेक्षिता। छन्दोऽनुगुणं पदानि प्रयुक्तानि चेत् काव्यं न भवति।

लोके वयं पश्यामः यत् बहवः अस्थाने राजन्ते। राजकीये क्षेत्रे एतत् विशेषतः दृश्यते। 'भारते जातमात्रः शासकः भवितुम् अर्हति' इति वाक्यम् एव सिद्धान्तं मन्यन्ते ते। 'तत्तस्य स्थानस्य किञ्चन मौल्यम् अस्ति, तदनुगुणं व्यवहरणीयम्' इति तु सर्वथा विस्मरन्ति।

व्यवहारे इदानीं योग्यतायाः अतीव गौणं स्थानम्। प्राप्तपदवीकः यः कोऽपि अध्यापकः भवितुम् अर्हति। आघ्रातशास्त्रः अपि शास्त्राणि बोधयति! यः बोधनीयस्य विषयस्य मर्मज्ञः न भवति सः तद्विषये किं वा बोधयेत्? स्थाने योग्यतावतां नियुक्तिः दूरे तिष्ठतु, योग्यतावताम् अभिज्ञानमं अपि न प्रचलति इदानीम्। पत्रान्तरितानि फलानि इव सन्ति तेऽपि।

# नूतनशब्दनिर्माणम्

शिष्यः – श्रीमन्! नूतनशब्द-निर्मिति-दृष्ट्या अखिलभारतव्यापितया किञ्चन संघटनात्मकं कार्यं प्रचलेत् इति तु तत्त्वम्। किन्तु तदर्थं महान् समयः, निरन्तरप्रयत्नः च अपेक्षितः।

आचार्यः – एतद्विषये मम अपि विमतिः नास्ति ...।

शि – तथा न, तादृशकार्यस्य सिद्धिपर्यन्तं वयं प्रतीक्षां कर्तुं न शक्नुमः। यतः नूतनशब्दानाम् आवश्यकता प्रतिदिनं प्रतिक्षणम् अस्ति एव।

आ – एतदर्थं तात्कालिकतया शब्दाः निर्मातव्याः, व्यवहारे उपयोक्तव्याः च इति किल भवतः अभिप्रायः?

शि – आम्। सस्यैः सह कसस्यानि अपि यथेष्टं प्रवृद्धानि यथा न भवेयुः तथा जागरूकता आश्रयणीया किल? मम मित्रेण केनचित् उक्तम् आसीत्– "आद्यातसंस्कृतः कश्चित् 'Bicycle Bell' इति अर्थं प्रतिपादयितुं 'गमनागमन-प्रतिरोधक-निषेध-सूचकम्' इति शब्दं निर्मितवान् आसीत्" इति। एवं भारतीयानां रक्ते एषा प्रवृत्तिः रूढा अस्ति। शब्दनिर्माणे सरलता, समानरूपता, सौष्ठवता इत्यादयः गुणाः अवश्यं भवेयुः एव किल? एवं तर्हि शब्दनिर्माणसन्दर्भे केचन नियमाः अङ्गीकरणीयाः भवन्ति। तादृशाः नियमाः के के भवेयुः इति?

आ – भोः, अहम् एतस्मिन् विषये न हि परिणतः। तथापि यथामति वक्तुं तु शक्नोमि।

शि – तावता अलम्। किन्तु सोदाहरणं, सविवरणं च ...।

आ – प्रथमः तु नियमः सरलतादृष्ट्या–

*निर्मितः शब्दः यावच्छक्यम् अकारान्तः स्यात्। वस्तुतः इदानीम् अपि लोके व्यवहारे अकारान्ताः एव शब्दाः अत्यधिकाः। ८०% ते एव राजन्ते। इतःपरम् अपि अकारान्ताः एव (अकारान्तपुल्लिङ्गः, आकारान्तस्त्रीलिङ्गः, अकारान्तनपुंसकलिङ्गः च) निर्मातव्याः।

अकारान्तेतराः न निर्मातव्याः इति मम अभिप्रायः न। तेषां निर्माणे कृते, प्रयोगक्लेशः तु भवति इति एतावत् एव वक्तुं शक्नोमि।

शि – इदानीं ऋकारान्त-सकारान्त-नकारान्तादयः शब्दाः तत्र तत्र निर्मिताः दृश्यन्ते किल?

आ – शब्दनिर्माणे सर्वेषाम् अपि समानाधिकारः किल? तथापि 'एतदन्तस्य शब्दस्य निर्माणं,तत् द्रव्यं भावं वा प्रकाशयितुम् अनिवार्यम् आसीत् वा?' इति तादृशैः पुनः एकवारं चिन्तितं चेत् युक्तम् अभविष्यत् इति मम अभिप्रायः।

शि – मम स्नेहितः कश्चन वदति– "यैः वारं वारं एतादृशशब्दानां प्रयोगे पाठने च क्लेशः अनुभूतः, यैः च भाषाभ्यासिनां महाक्लेशः प्रत्यक्षम् अवलोकितः, यैः च मध्यमस्तरीय-ज्ञानवन्तः अपि अभ्यासाभावतः प्रयोगे दोषम् आचरन्ति इति वस्तुस्थितिः सहार्दम् अङ्गीकृता, ते एव भवद्भिः प्रस्तुतां समस्याम् अवगच्छेयुः, न तु इतरे" इति।

आ – अस्तु तावत्, द्वितीयः अंशः– *निर्मीयमाणः शब्दः अल्पाक्षरः उच्चारणसुलभः च स्यात्। श्रुतिमधुरः अपि स्यात् एव।

शि – व्याकरणाविरुद्धाः भवेयुः इत्यपि एकः अंशः किल?।

आ – अथ किम्? संस्कृतसम्बन्धी यः कोऽपि व्यवहारः पाणिनिसीमाम् अतिक्रम्य न गच्छेत्।

शि – तर्हि 'सोफायां, दोसायाः पैसानाम्' इत्यादयः प्रयोगाः ....?

आ – परिहर्तव्याः इत्येव। तत्र किमर्थं सन्देहः? तादृशं द्रव्यं बोधयितुं युक्तः शब्दः वा अन्वेष्टव्यः, अव्युत्पन्नस्य (प्रकृति-प्रत्यय-विवेकरहितस्य) शब्दस्य विभक्तियोजनं वा न करणीयम्। अथवा तृतीयः सरलः मार्गः आश्रणीयः– 'सोफासनम्' इति संस्कृतशब्दं योजयित्वा वा वक्तव्यम्। वस्तुतः विचार्यमाणे सद्यः एषः एव मार्गः (तृतीयः) उचितः इति भाति।

उदाहरणान्तरं पश्यतु – कार्यानम्, जीपुयानम्, स्कूटरयानम्, बैक्यानम्, मेटेडोर्यानम् इत्यादिषु पूर्वोक्तः मार्गः अनुसृतः। यतः कार्जीपुप्रभृतयः नामपदत्वेन प्रसिद्धाः। शब्दान्तरैः तेषां बोधः दुःसाध्यः (प्रायः असाध्यः?) एव। अतः यानशब्दं योजयित्वा संस्कृतत्वं सम्पादितम्। तदा तेषां परस्परभेदः अपि सुस्पष्टं निरूपितः अभवत्।



# चन्दमामा

मार्च-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०
वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'    सञ्चालकः– 'नागिरेड्डी'

इदानीम् अस्माकं पुरतः त्रिविधा संस्कृतपण्डितपरम्परा दृश्यते। एका च इदमिदानीम्, एषु दशवर्षेषु वा शास्त्रम् अधीतवतां परम्परा – युवपरम्परा। अपरा च ३०-४० वर्षेभ्यः पूर्वं शास्त्रम् अधीतवतां परम्परा – ज्येष्ठपरम्परा। अन्या च ततः पूर्वं शास्त्राणि अधीतवतां परम्परा – वृद्धपरम्परा। एतासु तिसृषु अपि पण्डितपरम्परासु परिदृश्यमानः भेदः तु कियान्!

वृद्धपरम्परायां जाताः त्रिचतुर्षु शास्त्रेषु पारङ्गताः भवन्ति स्म। सर्वेषु अपि शास्त्रेषु तेषां समानं पाण्डित्यम्। तेषां प्रमुखं शास्त्रं किम् इत्येव ज्ञातुं न शक्यते। ज्येष्ठपरम्परायां जाताः एकस्मिन् शास्त्रे तु पारङ्गताः एव। द्वितीये तृतीये च शास्त्रे ते पारङ्गताः, विशेषपरिचययुताः वा भवन्ति एव। युवपरम्परायां जातानां तु एकस्मिन् शास्त्रे अपि विशेषज्ञानं प्रायः दुर्लभम्।

'उत्तीर्णतायै अध्ययनम्, उत्तीर्णता च उद्योगप्राप्तये' इति हि इदानीन्तनानां दृष्टिः। 'निष्कारणं शास्त्रम् अध्येतव्यम्' इति वचनम् इदानीम् उपहसनीयतां गतम्। उद्योगः प्राप्तः चेत् अध्ययनं समाप्तम् इति सार्वत्रिकी भावना। आघ्रातशास्त्रः किं शास्त्रं रक्षयेत्? अतः प्रथमं युवपरम्परायां जाताः आत्मनः दोषं जानीयुः। प्राचीनज्ञानस्रोतसः रक्षणं तु युवकानाम् एव खलु?

सम्पुटः - ३    मार्च-८७    सञ्चिका - १२

प्रतिकृतिमूल्यं रु. २-५०  *  वार्षिकं ग्राहकशुल्कं रु ३०-००

# रसवार्ता:

## महामीनः



लांग् ऐलेण्ड्तीरे एषु दिनेषु कश्चन धीवरः एकं महाकारकं श्वेतं मीनं गृहीतवान्। एतस्य महामीनस्य भारः १,५७० क्रि.ग्रां. आसीत्।

## भूकम्पात् शिरोवेदना

ओरिगान्प्रदेशे ३४ वर्षीया श्रीमती चार्लेट् किङ्ग् यदा आत्मनः शिरोवेदनां निवेदयन्ती दूरवाणीं करोति तदा सर्वकारीयाः अधिकारिणः 'सद्यः एव भूकम्पः भविष्यति' इति ज्ञात्वा जागरूकताक्रमान् अनुसरन्ति। इतःपूर्वं षड्वारं यावत् यदा श्रीमती चार्लेट् शिरोवेदनाम् अनुभूतवती तदा सर्वदा भूकम्पः जातः आसीत्। सूक्ष्मतरेण अपि भूचलनेन श्रीमती चार्लेट् प्रभाविता भवति इति वैद्याः भावयन्ति।





## कार्यानं तरति

मार्गे इव जले अपि सहजतया चलनसमर्थं कार्यानं क्यालिफोर्निया प्रदेशे कयाचित् संस्थया अन्विष्टम् अस्ति।

## हिमचित्रकः

एषु दिनेषु कुलूखाते हिमचित्रकाः दृष्टाः येषां च सन्ततिः नष्टप्राया इति चिन्तितम् आसीत्। एतेषां चर्मणः विशेषमूल्यम्। अतः एतेषां सन्ततेः रक्षणार्थं शासनेन कठोराः नियमाः निर्दिष्टाः सन्ति।



# रजिः

चक्रवर्तिनः पुरूरवसः पौत्रः रजिः वीराधिवीरः इति ख्यातः आसीत्। न केवलं मानवेषु, देवेषु अपि तत्समानः वीरः कोऽपि न आसीत्।

कदाचित् देवदानवयुद्धे कस्यापि पक्षस्य जयः न जातः। तदा देवाः ब्रह्मणः समीपं गत्वा पृष्टवन्तः– "युद्धे कः पक्षः जयं प्राप्स्यति?" इति।

"रजिः यस्मिन् पक्षे तिष्ठति तस्यैव पक्षस्य जयः" इति उक्तवान् ब्रह्मा।

ब्रह्मणा उक्तः विषयः कथञ्चित् राक्षसैः अपि ज्ञातः। अतः ते रजेः समीपं गत्वा "भवता अस्माकं पक्षे स्थातव्यम्" इति प्रार्थितवन्तः।

"जयप्राप्तेः अनन्तरं भवन्तः मां भवतां महाराजत्वेन अङ्गीकर्तुं सिद्धाः चेत् अहम् अपि युद्धे साहाय्यं कर्तुं सिद्धः" इति उक्तवान् रजिः। राक्षसाः एतत् निराकृत्य ततः निर्गताः।

अनन्तरं देवाः रजिसमीपम् आगतवन्तः। स्वकीयाम् अपेक्षां निवेदितवन्तः। तस्मै महाराजस्थानं दातुम् अङ्गीकृतवन्तः च।

देवदानवयोः घोरं युद्धं प्रवृत्तम्। देवाः राक्षसान् पराजित्य विजयं प्राप्तवन्तः। तदा देवेन्द्रः रजिसमीपं गत्वा नमस्कृत्य– "पिता पुत्रम् इव भवान् अस्मान् युद्धे रक्षितवान्" इति उक्तवान्।

"देवाः भवन्तः मां पितरं भावयन्ति। पितुः राज्यं पुत्रेषु किल सङ्क्रामति? किन्तु पुत्राणां राज्यं पितुः न भवति। अतः भवतां राज्यं भवन्तः एव परिपालयन्तु" इति तृप्त्या उक्तवान् रजिः।





# अतिसञ्चयः

पूर्वं केदारपुरग्रामे यतिराजः नाम कश्चित् आसीत्। तस्य तु अतिसञ्चयप्रवृत्तिः। अतः एव जनाः तम् 'अतिसञ्चयी यतिराजः' इत्येव आह्वयन्ति स्म।

यदा सः बालः आसीत् तदा एव तदीयौ मातापितरौ दिवङ्गतौ। वृद्धा षष्टिवर्षीया पितामही एव तं करुणया पालितवती।

पित्रार्जिता सम्पत्तिः आसीत् इति कारणतः तस्य विद्याभ्यासः निर्विघ्नं सम्पन्नः। यदा सः प्रौढः जातः तदा तेन उत्तमः उद्योगः अपि प्राप्तः।

यतिराजः पार्श्वग्रामीणां विमलानामिकां परिणीतवान्। पत्न्याः विषये तस्य महती प्रीतिः। विमला अपि पतिविषये प्रीतिमती एव, किन्तु सा पत्युः अतिसञ्चयप्रवृत्तिं न सहते।

प्रतिदिनं यतिराजः रात्रौ गृहस्य द्वाराणि तालेन कीलयित्वा पुनः अपि परीक्ष्य शयनं करोति। एवं परीक्षणं न एकवारम्, अपि तु दशाधिकवारं भवेत्।

शाक-क्षीरादिवाणिज्ये अपि तथैव। बहुधा चर्चां कृत्वा एकैकम् अपि पैसा गणयित्वा ददति।

यतिराजस्य अपरः अभ्यासः निरुपयोगिनां वस्तूनां सङ्ग्रहः। तस्य दृष्ट्या निरुपयोगिनः वस्तुनः एव न सन्ति। अतः सः सर्वाणि वस्तूनि आनीय गृहे स्थापयति।

रिक्ताः अग्निपेटिकाः, फेनकावरणानि, वस्तुभिः सह आगतानि सूत्राणि, प्राचीनाः रज्जवः, पुरातनाः पत्रिकाः, अयःखण्डाः, नारिकेलत्वचः, इत्यादीनि शतशः वस्तूनि सः सङ्गृहीतवान् अस्ति। अतः तस्य गृहे एतादृशानां वस्तूनां राशिः एव दृश्यते। यत्र कुत्रापि पादं स्थापयतु, हस्तं प्रसारयतु वा, तत्र प्राचीनं वस्तु किमपि लभ्यते एव।

यदा विमला प्रथमवारं गृहं प्रविष्टवती तदा एतानि अनपेक्षितवस्तूनि दृष्ट्वा



एतस्मिन् प्रपञ्चे निरुपयुक्तं किञ्चित् वस्तु अस्ति वा? सर्वाणि अपि यदाकदापि उपयोगाय भवन्ति एव। एतं पाठम् अहं मम पितामहीतः ज्ञातवान्। सा अल्पं तृणम् अपि न उपेक्षते स्म। महता प्रयत्नेन तत् सङ्गृह्णाति स्म। किं वस्तु कदा कस्य वा उपयोगाय भवेत् इति को वा जानाति?" इति।

विमला असमाधानेन पतिम् उक्तवती— "अविदितस्य वस्तुनः विषयं त्यजतु। अस्माकं गृहे विद्यमानैः एतैः वस्तुभिः कः लाभः? मन्दबुद्धिं मां किञ्चित् पाठयतु कृपया" इति।

"एवं वदतु। प्राज्ञतः विषयाः सङ्ग्रहणीयाः। पश्यतु, यदा वस्तु क्रीणीमः तदा आवरणादीनां कृते अपि धनं दद्मः एव। अतः तानि क्षिपामः चेत् अस्माकम् एव धनस्य अपव्ययः कृतः भवेत्" इति वदन् यतिराजः अर्धघण्टां यावत् उपन्यासं कृतवान्। उपयोगक्रमम् अपि सविस्तरं बोधितवान्। अनिवार्यतया सर्वं श्रुतवती विमला।

षट्सु मासेषु अतीतेषु अपि गृहे सङ्गृहीतानां तेषां वस्तूनाम् उपयोगार्थम् अवकाशः एव न कदाऽपि आगतः। निरुपयुक्तवस्तूनां राशिः तु दिने दिने वर्धते स्म।

एकदा विमलायाः सखी स्वसख्याः कौटुम्बिकजीवनं द्रष्टुम् आगतवती। समग्रं

जुगुप्सिता अभवत्। तानि नीत्वा मार्गपार्श्वे अवकरभाण्डे क्षेप्तुं सा उद्युक्ता। विपणितः प्रत्यागच्छन् यतिराजः पत्न्याः एतम् उद्यमं दृष्ट्वा कोपाविष्टः सन्— "महता प्रयत्नेन एतानि सर्वाणि सङ्गृहीतवान् अस्मि। भवती तानि निर्दाक्षिण्यं क्षिपति किल? किं क्षेपणोद्देशेन एतानि सङ्गृहीतानि?" इति गर्जितवान्।

विमला तु आश्चर्येण— "स्वच्छताकर्तृणाम् अभावतः एतानि अस्तव्यस्तं पतितानि सन्ति इति चिन्तितवती आसम्। एतैः वस्तुभिः कः उपयोगः?" इति पृष्टवती।

यतिराजः पत्नीं विशेषदृष्ट्या पश्यन् उक्तवान्— "किं भोः, एवं पृच्छति?

गृहं परिशील्य सा विमला पृष्टवती– "विमले! भवती विवाहतः पूर्वं स्वच्छताविषये बहु वदति स्म किल? इदानीं तु भवत्याः गृहं मार्गपार्श्वे स्थितम् अवकरभाण्डम् इव दृश्यते! किमर्थम् एवम् अभवत्?" इति।

विमलायाः इदानीम् उभयसङ्कटम्। पत्युः व्यवहारं सा सख्याः पुरतः वक्तुं न शक्नोति।

अतः सा उदासीनभावेन इव उक्तवती– "किं वदामि भोः? प्रतिदिनम् अपि चिन्तयामि – स्वच्छता करणीया इति। किन्तु आलस्येन किमपि न करोमि एव अहम्" इति।

तद्दिने सख्याः निर्गमनानन्तरं सा पतिं प्रवृत्तं सर्वं सखेदं निवेदितवती। तदा यतिराजः कोपेन उक्तवान्– "विवेचनं विना अहम् एतत्सर्वं सङ्गृहीतवान् इति भवती चिन्तयति वा? तानि सर्वाणि गृहे व्यवस्थितं स्थापयतु। तानि तत्र तिष्ठन्तु नाम। का हानिः तेन? सा काचित् भवत्याः सखी अविचार्य किमपि उक्तवती चेत् तेन भवत्याः किमर्थम् एतावती चिन्ता? भवत्याः सामर्थ्यं यदि स्यात् तर्हि सा बोधनीया आसीत्। एकं तु स्वयं चिन्तनीयम्। अन्यथा अन्येन उक्तं वा स्वीकरणीयम्" इति।

विमलायाः अनुजः रमेशः। सः कदाचित् अग्रजायाः गृहम् आगतवान्। तदा विमला पत्युः दुरभ्यासं सूचयित्वा 'एतत्परिहारार्थं




कञ्चित् उपायं चिन्तयतु कृपया' इति उक्तवती।

रमेशः अपि तस्मिन् गृहे तत्र तत्र राशिरूपेण स्थितानि वस्तूनि दृष्टवान् आसीत्। बुद्धिमान् सः अग्रजाम् एकम् उपायं सूचितवान्।

विमला प्रथमं तु एतम् अनुसर्तुं सङ्कोचम् अनुभूतवती। अन्ते अनुजे विश्वासं स्थापयन्ती सा अनुजस्य प्रस्तावम् अङ्गीकृतवती।

तस्मिन् दिने रात्रौ विमला गृहस्य पुरोभागे अनुजस्य शयनव्यवस्थां कृतवती। यतिराजः विमला च यथापूर्वं प्रकोष्ठे शयनं कृतवन्तौ।

यतिराजः प्रतिदिनम् इव द्वाराणि

कीलयित्वा, कीलनं पुनः पुनः दृढीकृत्य तृप्त्या शयनं कृतवान्।

अर्धरात्रसमये पाकशालायाः पार्श्वे स्थिते प्रकोष्ठे कोऽपि शब्दः श्रुतः। जागरितः यतिराजः बिमलाम् उत्थापितवान्। अत्रान्तरे कृष्णवेषधारी कश्चित् तयोः पुरतः प्रत्यक्षम् अभवत्। समीपे एव स्थिताम् एकां कूपिकाम् उन्नीय भित्तौ घट्टयित्वा सः शिष्टं भागम् आयुधत्वेन तयोः पुरतः गृहीतवान्।

यतिराजः भीत्या कम्पमानः आक्रन्दनं कर्तुम् उद्युक्तः। तदा सः कृष्णवेषधारी– "आक्रन्दनं करोति चेत् एतया छिन्नकूपिकया मारयेयम्। विना विरोधं तस्य स्तम्भस्य समीपं गच्छतु" इति कोपेन गर्जितवान्।

कृष्णवेषधारिणः कण्ठस्वरेण भीतः यतिराजः विना शब्दं स्तम्भस्य समीपं गतवान्। विमला अपि तम् अनुसृतवती। सः कृष्णवेषधारी समीपे पतितया रज्ज्वा यतिराजं विमलां च स्तम्भे बद्धवान्।

'आक्रन्दनं न करणीयम्' इति पुनः अपि संसूच्य सः चोरः यतिराजस्य हस्ततः कुञ्चिकां स्वीकृतवान्। स्वेच्छया पेटिकाः उद्घाट्य धनम् आभरणानि अमूल्यवस्त्राणि च स्वीकृतवान्। पाकशालां गत्वा सर्वाणि पात्राणि एकस्यां प्राचीनगोण्यां स्थापितवान्। यतिराजः विमला च असहायतया एतत्सर्वं पश्यतः।

कार्यसमाप्तेः अनन्तरं यतिराजः अग्रे आगत्य– "अद्य प्रस्थानसमये चौर्यस्य विचारः न आसीत् मम मनसि। अतः एव



रज्जुं छुरिकां वा न आनीतवान् अहम्। तथापि एतस्मिन् गृहे मम कार्यं विनायासं सम्पन्नम्। भवन्तौ इव इतरे अपि एवम् एव यदि अस्मत्प्रयोजनकारीणि वस्तूनि सङ्गृहणीयुः तर्हि अस्माकम् उपकारः भवेत्। छुरिकायाः रज्ज्वाः गोण्याः च आनयनं विना एव कार्यं सिध्यति'' इति उक्तवान्।

अनन्तरं सः कृष्णवेषधारी गृहं समग्रं पुनः परिशील्य उक्तवान्– ''यस्मिन् गृहे अहं चौर्यं करोमि तस्य गृहस्य ज्वालनं मम सम्प्रदायः। तत् कार्यम् अपि इदानीं समापयामि अहम्'' इति।

यतिराजः कष्टेन स्वरम् उत्पादयन् उक्तवान्– ''भोः, गृहे स्थितानि रत्नाभरणादीनि नीतवान् किल भवान्? पुनः ज्वालनम् अपि किमर्थं चिन्तयति? तादृशं घोरं कार्यं मास्तु भोः'' इति।

तदा सः कृष्णवेषधारी ताडयितुम् इव अग्रे आगत्य ''मम पद्धतिं त्यक्तुं माम् उपदिशति वा भवान्?'' इति कोपेन पृष्टवान्। अनन्तरं कोणे राशिरूपेण स्थितानि प्राचीनकागदानि नारिकेलत्वचः, वस्तूनां छिन्नानि आवरणानि इत्यादीनि सङ्गृह्य गृहस्य पुरतः वितर्दिकायाम् एकत्रीकृतवान्। आभरणादीनां ग्रन्थिं पात्राणां गोणीं च उन्नीय गच्छन् अग्निपेटिकासाहाय्येन अग्निं प्रज्वाल्य अवकरराशौ क्षिप्त्वा ततः गतवान्।

तस्य गमनस्य समनन्तरम् एव यतिराजः विमला च उच्चैः आक्रन्दनं कृतवन्तौ। तदा बहिः शयितः रमेशः 'एषः अहम् आगतः'



इति वदन् अन्तः आगतवान्। तस्य हस्ते चोरेण नीता गोणी, आभरणग्रन्थिः च आसीत्।

रमेशः हस्ते स्थितं तत्रैव पातयित्वा पाकशालां गत्वा जलम् आनीय अग्निं निर्वापितवान्।

"भवतोः कोलाहलेन अहं जागरितः। चोरः मां दृष्ट्वा हस्ते स्थितां गोणीम् आभरणग्रन्थिं च क्षिप्त्वा प्राकारम् अतिक्रम्य पलायितवान्" इति वदन् यतिराजं विमलां च बन्धविमुक्तौ कृतवान्।

विमला कोपेन पतिं पश्यन्ती– "एतत्सर्वं भवत्कारणतः सम्पन्नम्। 'उपयोगाय भवेयुः' इति चिन्तयन् भवान् सर्वाणि वस्तूनि सङ्गृहीतवान्। तानि इदानीम् अस्माकं विपत्तये अभवन्। यदि मम अनुजः रमेशः समये जागरितः न स्यात् तर्हि गृहे बद्धौ आवाम् अपि दग्धौ अभविष्याव। रत्नाभरणादिभिः वञ्चितौ स्याव च" इति उक्तवती।

यतिराजः पश्चात्तापेन– "चोरः मयि विवेकं जागरितवान्" इति उक्तवान्।

"इतःपरं वा भवतः अतिसुरक्षायाः अतिसञ्चयस्य च मितिः भवतु" इति बोधितवान् रमेशः।

"आम्। भवदुक्तं युक्तम् एव। किन्तु मम एकः संशयः – शयनतः पूर्वम् अहं सर्वाणि द्वाराणि कीलयित्वा पुनः परीक्ष्य च शयनं कृतवान्। एवं स्थिते चोरः कथं वा अन्तः आगतवान्?" इति संशयं प्रकटितवान् यतिराजः।

"प्राचीनानि विविधानि दण्डादीनि अयःशलाकादीनि च बहिः तत्र तत्र पतितानि आसन्। तेषां साहाय्येन चोरः अर्गलम् उद्घाटितवान्। द्वारसमीपे तानि पतितानि दृश्यन्ते किल?" इति उक्तवती विमला।

अनन्तरकाले यतिराजः अनपेक्षितवस्तूनां सङ्ग्रहणं त्यक्तवान्। उपायेन पतिं परिष्कृतवन्तम् अनुजं रमेशं विमला कृतज्ञतापूर्वकं स्मृतवती। चोरस्य रहस्यं तु रमेशः विमला च कदापि न उद्घाटितवन्तौ एव।





# सहजता

पूर्वं माधवशर्मा नाम कश्चन चित्रकारः आसीत्। सः चित्रलेखने सुप्रसिद्धः। तेन चित्रितानि चित्राणि महावणिजः, धनिकाः, भूस्वामिनः इत्यादयः महता मूल्येन क्रीणन्ति स्म।

एकदा सः कलहनिरतयोः दृप्तवृषभयोः चित्रं लिखितवान्। तत् चित्रं दृष्ट्वा चित्रकारस्य अभिमानिनः सर्वे बहुधा प्रशंसां कृतवन्तः।

एतैः प्रशंसावचनैः माधवशर्मा अतीव सन्तुष्टः। सः तद्दिने सर्वान् अभिमानिनः आहूय विशेषभोजनं व्यवस्थापितवान्। वृषभयुद्धस्य चित्रं वस्त्रे लेपयित्वा श्रीगन्धस्य दण्डे बद्धवान्, तत् भोजनशालायां स्थापितवान् च।

'एतत् चित्रं राजधानीं प्रति नेतव्यम्' इति सूचितवन्तः भोजनकूटम् आगताः ते अभिमानिनः।

"सत्यम्। महाराजाय यदि एतत् चित्रं प्रदर्शयेयं तर्हि सोऽपि सन्तुष्टः भवेत्। विशेषपारितोषिकं दद्यात् अपि" इति चिन्तितवान् माधवशर्मा। अतः सः अनन्तरदिने एव कैश्चित् मित्रैः सह राजधानीं प्रति प्रस्थितः एव।

मार्गे ते कञ्चित् ग्रामं प्राप्तवन्तः। मित्रेषु एकः माधवशर्माणम् उक्तवान्– "एतस्मिन् ग्रामे युद्धरतयोः वृषभयोः तत् चित्रं प्रदर्शयेम। तेन भवतः महत्त्वं एते अपि जानन्तु नाम" इति।

माधवशर्मा एतत् अङ्गीकृतवान्। पेटिकातः वृषभयोः युद्धस्य चित्रं बहिः आनीय प्रदर्शयन् सः तत्र सम्मिलितान् जनान् उक्तवान्– "मम समीपे श्रेष्ठानि बहूनि चित्राणि सन्ति। किन्तु तेषाम् अर्थं ज्ञातुं न शक्नुयुः भवन्तः। एतत् वृषभयोः युद्धस्य चित्रं पश्यन्तु भवन्तः। चित्रणं सहजम्

अस्तीति कारणतः भवताम् अपि सन्तोषः भवेत्'' इति।

ग्रामीणाः कुतूहलेन चित्रं परिशीलितवन्तः। माधवः ग्रामीणानां तेषां प्रतिक्रियां ज्ञातुम् इच्छन् किमपि प्रष्टुम् उद्युक्तः।

अत्रान्तरे कश्चन युवकः कृषिकः उच्चैः हसितवान्। हसन्तं युवकं दृष्ट्वा माधवशर्मा अतीव कुपितः।

सः तं कृषिकयुवकं कोपेन पश्यन्– ''अये! चित्रकलाविषये भवान् किं वा जानाति? किमर्थं तथा हसति? का वा असहजता तत्र दृष्टा भवता?'' इति पृष्टवान्।

''असहजता काऽपि नास्ति। अतीव सहजम् अस्ति चित्रम्। अतीव सहजम्'' इति मन्दहासं प्रकटयन् उक्तवान् सः युवकः।

तदा माधवस्य मित्रेषु अन्यतमः तं कृषिकयुवकं दृष्ट्वा– ''एषः कः इति जानाति खलु भवान्? माधवशर्मा एषः चित्रकारेषु सुप्रसिद्धः। एतस्य चित्राणि धनिकाः भूस्वामिनः महावणिजः च महता धनव्ययेन क्रीणन्ति। महाराजोऽपि क्रीणाति। इतोऽपि किम् अधिकं वक्तव्यम्? भवान् तु एतत् चित्रं दृष्ट्वा उपहसति। एतत् तु अनुचितम्'' इति उक्तवान्।

तदा कृषिकयुवकः– ''भोः, वृषभयोः कलहम् अहम् इतःपूर्वं बहुवारं दृष्टवान् अस्मि। यदा तौ शिरः अवनमय्य शृङ्गाभ्यां परस्परं घट्टयतः तदा तयोः पुच्छं कशारज्जुः इव वायौ परिभ्रमति। चित्रे लिखितम् इव कदापि अधोमुखं शान्तं न तिष्ठति'' इति उक्तवान्।

एतत् श्रुत्वा एतावत्पर्यन्तं मौनं स्थिताः सर्वे ग्रामीणाः उच्चैः हसितवन्तः। तदा माधवशर्मा स्वहस्ते स्थितं चित्रपटं झटिति पुटीकृत्य पेटिकायां स्थापितवान्।

चित्रकारस्य अभिमानिनः सर्वे मौनं शिरः अवनमय्य स्थितवन्तः। माधवशर्मा तत्क्षणे एव ततः प्रस्थितवान् – न राजधानीं प्रति, अपि तु स्वग्रामं प्रति।






# १

('मम पिता कपिलपुरदुर्गे एव कुत्रापि बन्धने स्थापितः अस्ति' इति चित्रसेनमु उक्तवती कान्तिमती। चित्रसेनः सैन्येन सह कपिलपुरदुर्गसमीपं गतवान्। तत्र तेन दुर्गभित्तेः उपरि रक्षणकार्ये निरताः केचन सैनिकाः, आकाशे डयमानौ भयङ्करपक्षिणौ च दृष्टाः। 'ज्वलन्तीं दीपशिखां प्रदर्शयामः चेत् एते पक्षिणः भीत्या पलायन्ते' इति सूचितवान् अमरपालः। तदनन्तरम् ....)

अमरपालस्य वचने चित्रसेनस्य इदानीं पूर्णः विश्वासः। यतः अमरपालेन गोष्ठ-ज्वालनपूर्वकं सर्वे भयङ्करपक्षिणः यत् मारिताः तत् चित्रसेनः स्वयं दृष्टवान् अस्ति खलु? अतः एव अमरपालस्य व्यवहारे,वचने, सामर्थ्ये च दृढं विश्वसिति चित्रसेनः। अग्निं दृष्ट्वा भयङ्करपक्षिणः निश्चयेन भीताः भविष्यन्ति इति सः निश्शङ्कम् अङ्गीकरोति।

किन्तु उग्राक्षः न तथा। अमरपाले यद्यपि सः विश्वसिति, किन्तु अग्नितः भयङ्करपक्षिणः भीताः भवेयुः इत्यत्र तस्य प्रबलः सन्देहः। अतः वृक्षस्य अधः स्थितः सः अग्रे गन्तुं न इच्छति। तस्य अनुचराः अपि तथैव आचरन्ति।

"अस्माकं हस्ते स्थिताः दीपशिखाः दृष्ट्वा ते राक्षसपक्षिणः भीत्या पलायन्ते इति अहं तु न विश्वसिमि। तेषां पक्षचालनेन महावृक्षाः अपि धराशायिनः भवन्ति। एवं स्थिते अस्माकं दीपशिखानां का कथा?



पक्षचालनतः उत्पन्नेन वायुना अग्निज्वाला निर्विण्णा भवति, तावदेव'' इति उक्तवान् उग्राक्षः।

तस्य वचनं विशेषतः अपरिगणयन् अमरपालः– ''भोः, दीपधारिणः, अत्र आगच्छन्तु। भवन्तः सर्वेषां पुरतः भवेयुः'' इति आज्ञापितवान्।

अनन्तरक्षणे एव ते दीपधारिणः दीपशिखाः गृहीत्वा अग्रे आगत्य स्थितवन्तः।

तान् दीपशिखाधारिणः चित्रसेनाय प्रदर्शयन् अमरपालः उक्तवान्– ''महाराज! यदि भवान् अनुमतिं ददाति तर्हि एते दीपशिखाः प्रज्वाल्य दुर्गभित्तिसमीपं गच्छन्ति। तान् अनुसृत्य सैनिकाः अपि दुर्गसमीपं गत्वा आक्रमणं कर्तुम् अर्हन्ति। दीपज्वालां दृष्ट्वा भयङ्करपक्षिणः पलायनं कुर्वन्ति एव। तद्विषये संशयः एव मास्तु'' इति।

एतत् श्रुत्वा उग्राक्षः– ''भो भोः!'' इति करताडनशब्दपूर्वकं सर्वान् अनुचरान् समीपम् आहूतवान्। 'एते वयम् उपस्थिताः' इति वदन्तः सर्वे राक्षसाः चतसृभ्यः दिग्भ्यः समागत्य उग्राक्षं परितः स्थितवन्तः।

''भवत्सु कस्यापि भीतिः मास्तु। केचन बलयुतान् वृक्षान् उत्पाट्य तेषां द्वारा दुर्गद्वारं भञ्जयन्तु। अन्ये केचन महाखनित्रैः भित्तौ रन्ध्रं कर्तुं प्रयत्नं कुर्वन्तु। अपरे केचन पतितायाः भित्तेः शिलाखण्डान् मृत्तिकां च ततः नीत्वा दूरे क्षिप्त्वा मार्गं समीकुर्वन्तु। सर्वाणि अपि कार्याणि युगपत् एव प्रचलेयुः'' इति उच्चैः आज्ञां कृतवान् उग्राक्षः।

अनन्तरं सः चित्रसेनं पश्यन्– ''द्वारप्रदेशे केवलं प्रवेशः न, तत्र तत्र दुर्गभित्तिं पातयित्वा सर्वाभ्यः दिग्भ्यः प्रवेशं करवाम। तदा दुर्गस्थाः सैनिकाः सम्भूय अस्मान् सम्मुखीकर्तुं न शक्नुवन्ति। भयङ्करपक्षिणः अस्माकम् उपरि आक्रमणं यथा न कुर्युः तथा व्यवस्था तु अमरपालस्य। अत्र कोऽपि व्यत्ययः न भवेत्'' इति उक्तवान्।

''तेभ्यः बुद्धिहीनेभ्यः पक्षिभ्यः भवतां भीतिः मास्तु एव। भवतां सर्वेषां रक्षणभारः मम एव। मयि विश्वासं स्थापयत। तां

चिन्तां त्यक्त्वा स्वकीये कार्ये उद्युक्तः भवतु च" इति उक्तवान् अमरपालः।

"भोः अमरपाल! भवतः सर्वान् रक्षामि इति मानवाधमस्य भवतः वचनं किम् आत्मप्रशंसापरम्? यदि शक्तिः अस्ति तर्हि कार्यस्य आरम्भं करोतु भोः!" इति गर्जन् उग्राक्षः गदाम् उन्नीतवान्।

"उग्राक्ष ! तिष्ठतु तावत्। भवतः राक्षसावेशं कृपया निगृह्णातु" इति उक्तवती राजकुमारी।

"भवन्तः अत्र अहमहमिकया विकत्थनं कुर्वन्तः तिष्ठन्ति चेत् तत्र कारागारे स्थितः मम पिता शत्रुभिः नितरां पीडितः भवेत्। अतः महाराज! विलम्बं विना कार्यारम्भः उचितः" इति चित्रसेनम् उक्तवती सा।

"सत्यम् एतत्" इति अङ्गीकृत्य चित्रसेनः उग्राक्षं पश्यन् उक्तवान्– "भोः उग्राक्ष! भवान् राक्षसश्रेष्ठः इत्यपि सत्यम् एव। सामान्यस्य अमरपालस्य उपरि भवतः प्रतापप्रयोगः किमर्थम्? दुर्गस्य अन्तः ये शत्रवः सन्ति, ये च भयङ्करपक्षिणः आकाशे उड्डयन्ते, तेषाम् उपरि भवान् बलं प्रदर्शयतु। प्रतापप्रदर्शनार्थम् एषः सदवकाशः" इति।

उग्राक्षः उच्चैः एकवारं हुँकृत्य गदां भ्रामयन् उत्साहेन उत्प्लुत्य "भोः राक्षसवीराः! आगच्छन्तु ..." इति उक्त्वा अग्रे प्रस्थितः। सर्वे राक्षसाः पादाघातेन एव महावृक्षान् सलीलं पातयन्तः, वृक्षं स्कन्धे



आरोप्य, शाखाः हस्तेन भञ्जयित्वा क्षिपन्तः जयकारं कुर्वन्तः च दुर्गस्य दिशि धावितवन्तः।

चित्रसेनस्य सैनिकाः तु उज्ज्वलं ज्वलन्तीः दीपशिखाः गृहीत्वा दुर्गस्य द्वारस्य दिशि प्रस्थितवन्तः।

क्षणाभ्यन्तरे दुर्गपरिसरे भूकम्पेन इव विचित्रं वातावरणम् उत्पन्नम्। कोलाहलः, हाहाकारः, सम्भ्रमः, धूलिः! पशु-पक्षिणः दिग्भ्रान्त्या दूरं धावितवन्तः।

चित्रसेनः कान्तिमती च सैनिकानाम् उत्साहं वर्धयन्तौ अश्वम् आरुह्य वेगेन तान् अनुसृतवन्तौ।

उग्राक्षः तु गदां भ्रामयन् सर्वेषाम् अग्रे गच्छन् आसीत्। तस्य एव हुँकारध्वनिः



पृथक् स्पष्टतया श्रूयते स्म।

यदा ते दुर्गद्वारसमीपं गतवन्तः तदा दुर्गभित्तेः उपरिभागतः बाणानां वृष्टिः आरब्धा। चित्रसेनपक्षीयाः अपि प्रतिक्रियारूपेण बाणप्रयोगम् आरब्धवन्तः। दुर्गसैनिकानां बाणैः चित्रसेनपक्षीयाः केचन व्रणिताः। राक्षसाः तु शत्रुबाणान् उपेक्षमाणाः अग्रे गत्वा वृक्षैः द्वारं ताडयितुम् आरब्धवन्तः। अन्ये केचन राक्षसाः महाकारकैः खनित्रैः दुर्गभित्तिखननं समारब्धवन्तः।

तदा अकस्मात् आकाशः स्फुटितः इव। यावत् सर्वे आश्चर्येण भीत्या च उपरि दृष्टवन्तः तावता भयङ्करपक्षिद्वयं महावेगेन आगत्य सैनिकानाम् उपरि आक्रमणम् अकरोत्।

अमरपालः हस्ते स्थितया दीपशिखया तौ पक्षिणौ भाययन्– "कस्यापि भीतिः मास्तु। दीपशिखाः तयोः दिशि क्षिपन्तु" इति उच्चैः घोषितवान्।

एककाले एव असङ्ख्याः दीपशिखाः आकाशे व्याप्ताः अभवन्।

एतेन तौ भयङ्करपक्षिणौ भीतौ। आक्रमणकार्यं परित्यज्य विकारध्वनिम् उत्पादयन्तौ तौ आकाशे एव डयमानौ स्थितवन्तौ। पक्षिवाहकौ तु शूलायुधैः तौ पीडयन्तौ आक्रमणार्थं पुनः पुनः प्रेरितवन्तौ।

अधः प्रज्वलन्तम् अग्निमण्डलं दृष्ट्वा भीतौ तौ पक्षिणौ प्रतिगमने उत्सुकौ अभवताम्। तदा पक्षिवाहकौ शूलायुधेन तौ सम्यक् पीडितवन्तौ। तेन एकः पक्षी वेदनाम् असहमानः उन्मुखं तिर्यक् च द्वित्रवारम् उड्डयनम् अकरोत्। तदा शूलहस्तः पक्षिवाहकः आत्मतोलनम् अप्राप्य चित्रसेनपक्षीयानां मध्ये अपतत्।

चित्रसेनपक्षे विजयध्वनिः विजृम्भितः अभवत्। भयङ्करपक्षिणौ आकाशे कुत्रापि अदृश्यतां गतवन्तौ।

एतावत्पर्यन्तं पक्षिणोः उपरि विश्वस्य शत्रवः सधैर्यं बाणप्रयोगं कुर्वन्तः आसन्। किन्तु यदा एकः पक्षिवाहकः भूमौ अपतत् पक्षिणौ च अदृश्यतां गतौ तदा ते अपि धैर्यच्युताः अभवन्। प्राणरक्षणाशया




दुर्गभित्तितः अवप्लुत्य राजभवनस्य दिशि धावितुम् आरब्धवन्तः।

यदा उपरिष्टात् बाणवर्षणं स्थगितं तदा पतितायाः भित्तेः मध्यतः भिन्नेन द्वारेण च चित्रसेनपक्षीयाः सैनिकाः अन्तः प्रविष्टवन्तः। राक्षसाः अपि भित्तिरन्ध्रं विशालीकृत्य अन्तः गतवन्तः।

विशेषप्रतिरोधं विना एव राजभवनं चित्रसेनस्य वशे आगतम्। ये तु नागवर्मपक्षीयाः सैनिकाः विरोधं प्रदर्शितवन्तः ते राक्षसानां गदाभिः मर्दिताः अभवन्।

राजभवनं यद्यपि वशे आगतं, किन्तु राजा वीरसिंहः कुत्र इति न ज्ञायते। चित्रसेनः तीव्रं तस्य अन्वेषणं कर्तुम् आरब्धवान्।

'शत्रवः वीरसिंहं दुर्गात् बहिः रहस्यरूपेण नीतवन्तः स्युः वा?' इति संशयः अपि उत्पन्नः चित्रसेनस्य मनसि। तदा कान्तिमती दृढस्वरेण उक्तवती– "मम पिता राजभवने एव कुत्रापि प्रकोष्ठे बद्धः अस्ति। सैनिकानां द्वारा एकैकः अपि प्रकोष्ठः सम्यक् परिशीलनीयः" इति।

एतदनुगुणं सैनिकाः राक्षसाः च राजभवनस्य कोणे कोणे अन्वेषणम् आरब्धवन्तः।

तदा भूगृहस्य कस्मिंश्चित् कोणे यातनाशब्दः सैनिकैः श्रुतः। ते सैनिकाः शब्दम् अनुसृत्य दीपं गृहीत्वा गतवन्तः। तत्र वायुसञ्चारः अपि विरलः आसीत्। यस्मात् प्रकोष्ठात् वेदनाशब्दः निस्सरति स्म, सः प्रकोष्ठः महाकारकेण तालेन कीलितः आसीत्।

अयःशलाकानां मध्यतः यदा प्रकाशः प्रकोष्ठस्य अन्तः गतः तदा सैनिकैः मन्दप्रकाशे दृष्टं यत् कोणे काचित् मानवाकृतिः भित्तिम् आलम्ब्य स्थिता अस्ति।

"एषः एव अस्माकं महाराजः वीरसिंहः" इति सन्तोषेण उक्तवान् कश्चन सैनिकः।

एषा वार्ता क्षणाभ्यन्तरे सर्वत्र प्रसृता। सैनिकाः राक्षसाः च सर्वे तत्र सम्मिलिताः। किन्तु अन्तः प्रवेष्टुं कोऽपि न शक्नोति। अन्तःप्रवेशार्थं तालः भञ्जनीयः अस्ति।

सैनिकद्वारा वार्तां श्रुत्वा चित्रसेनः

कान्तिमती च तत्र आगतवन्तौ। प्रकोष्ठे एकस्मिन् कोणे भित्तिम् आलम्ब्य स्थितं, कष्टेन श्वासोच्छ्वासं कुर्वन्तं महाराजं तौ दृष्टवन्तौ।

"किमर्थं तूष्णीं स्थितवन्तः? भञ्जयन्तु तालम्" इति सैनिकान् आज्ञापितवान् चित्रसेनः।

"भवतः आज्ञायाः प्रतीक्षायाम् आस्म" इति वदन्तः सैनिकाः तालं भञ्जयितुम् उद्युक्ताः। किन्तु कूष्माण्डाकारकः प्राचीनः सः तालः ताडनेन प्रतिध्वनिं केवलम् उत्पादयति स्म, न तु भग्नः भवति।

"एतस्य तालस्य भञ्जनम् कष्टसाध्यम् एव। कुञ्चिका यदि स्यात् ..." इति आयासम् अनुभवन् उक्तवान् कश्चित् सैनिकः।

"किम् एतदर्थं द्रोही नागवर्मा शरणं गन्तव्यः इति अभिप्रैति वा भवान्?" इति कोपेन वदन् चित्रसेनः स्वयं सैनिकस्य हस्ततः मुद्गरं स्वीकृतवान्। अत्रान्तरे "भोः, एषः अहम् आगतः" इति वदन् उग्राक्षः अग्रे आगतवान्।

तं दृष्ट्वा कान्तिमती– "भोः उग्राक्ष! मम पिता अस्मिन् प्रकोष्ठे शत्रुभिः बन्धने स्थापितः। भवान् क्षणमात्रेण एतं महातालं भञ्जयतु कृपया" इति उद्वेगेन उक्तवती।

"तत्र किं कष्टम्?" इति वदन् उग्राक्षः सैनिकान् अपसारयन् अग्रे आगतवान्। हस्तेन तालं बलेन आकृष्टवान् च। किन्तु




तेन तालः न भग्नः। सः मुष्टिद्वयेन गृहीत्वा पुनः अपि आकृष्टवान्। तेन अयःशलाकाः कम्पिताः अभवन्, न तु तालः। उग्राक्षः श्रान्तः।

"अहो! नागवर्मा तदनुचराः च विचित्राः एव! द्वारापेक्षया दृढतरं तालं स्थापितवन्तः किल ते!" इति उद्गारं प्रकटयन् उग्राक्षः हस्तद्वयेन अयःशलाकाम् उभयतः आकृष्टवान्। तदा तयोः मध्ये अन्तरम् अधिकं जातम्। तन्मध्यतः सैनिकाः दीपशिखाम् अन्तः नीतवन्तः।

इदानीम् अन्तर्भागे प्रकाशः स्पष्टं प्रसृतः। अयःस्तम्भे शृङ्खलाभिः हस्तपादबन्धनपूर्वकं बद्धः राजा वीरसिंहः सर्वेषां दृष्टिगोचरः अभवत्। तस्य मुखम्

अपि वस्त्रेण दृढं बद्धम् आसीत्। श्वासोच्छ्वासः अपि कष्टेन एव प्रचलति स्म। कीदृशी कष्टकरी स्थितिः महाराजस्य!

पितुः दारुणां परिस्थितिं दृष्ट्वा उद्वेगवशात् कम्पमाना कान्तिमती "तात!" इति आक्रन्दनं कुर्वती अयःशलाकानां मध्यतः अन्तः प्रविष्टवती।

चित्रसेनः अपि ताम् अनुसरन् अन्तः गतवान्। वीरसिंहस्य मुखे बद्धं वस्त्रं निष्कासितवान्। उग्राक्षः अपि तत्र आगत्य वीरसिंहस्य बन्धनानि अपसारितवान्।

"पुत्रि! कान्तिमति! भवति! भवतीम् अस्मिन् जन्मनि पुनः पश्येयम् इति न निरीक्षितवान् आसम् अहम्" इति कष्टेन वदन् वीरसिंहः अङ्गाङ्गानि शिथिलीकुर्वन् भित्तिम् आलम्बितवान्। राजकुमारी झटिति समीपं गत्वा अङ्गमर्दनं कर्तुम् आरब्धवती।

अत्रान्तरे एकः सेवकः महाराजाय सुखासनम् आनीतवान्। अपरः पानार्थं पात्रे जलम् आनीतवान्।

वीरसिंहः किञ्चित् जलं पीतवान्। इदानीं अङ्गेषु रक्तपरिचलनं सम्यक् जातम्। अतः सः द्वित्रवारं हस्तपादादिकम् इतस्ततः सञ्चाल्य सुखासने उपविष्टवान्। पुत्रीं प्रीत्या पश्यन्– "सः द्रोही नागवर्मा मृतः, उत बन्धने अस्ति?" इति पृष्टवान्।

कान्तिमती स्वयं वक्तुम् अनिच्छन्ती चित्रसेनस्य मुखं दृष्टवती।

तस्याः भावं ज्ञात्वा चित्रसेनः अग्रे आगत्य– "महाराज! मम नाम चित्रसेनः। अहं कः, मम राज्यं किम् इति भवान् इतः पूर्वम् एव ज्ञातवान् स्यात् अपि। एषः राक्षसराजः उग्राक्षः। केनचित् नियमेन बद्धः सः मम सेवकत्वम् अङ्गीकृतवान्। नागवर्मा इदानीं मम पितुः राज्यस्य धवलगिरेः उपरि आक्रमणं कर्तुं गतवान् अस्ति। 'यदि शक्यं, सः मार्गे एव अवरुध्य नाशनीयः' इति उक्त्वा सेनानायकं तत्र नियोज्य अहम् अत्र आगतवान्। इदानीं भवतः विमोचनं सम्पादितवान् च" इति निवेदितवान्। (अनुवर्तते)






# जीवः अमूल्यः

त्रिविक्रमः वेतालस्य शापसामर्थ्यं जानाति। तथापि सः 'वेतालस्य कपिमुष्टितः विमोचनं प्राप्नोमि एव' इति दृढतरेण विश्वासेन पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! इदानीं तु अन्धकारः। शृगालानाम्, उलूकानां च कण्ठस्वरेण रात्रेः भीकरता प्रवृद्धा अस्ति। एतस्मिन् श्मशाने भवान् निरन्तरम् असफलताम् अनुभवन् अपि यत् अग्रे गच्छति तेन अहं सन्तुष्टः अस्मि। किन्तु भवान् अस्मिन् प्रयत्ने सफलतां प्राप्य अपि अविवेकिना इव अज्ञानिना इव च व्यवहरन् फलात् वञ्चितः भवेत् वा इति मम संशयः। अत्र उदाहरणरूपेण केदारनाथस्य कथां श्रावयामि। श्रद्धया शृणोतु। प्रयोजनान्तरं न सिद्ध्येत् चेदपि मार्गायासः तु परिहृतः भवति एवं" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



चन्दनपुरराज्यस्य परिपालकः चन्द्रसिंहः। तस्य पुत्री कुमुदिनी। महाराजस्य अत्यन्तप्रीतिपात्रभूतां तां कश्चन प्रबलः व्याधिः बाधते स्म। चिकित्सायां परिणतस्य राजवैद्यस्य सर्वाः चिकित्साः व्यर्थाः आसन्। अन्यराज्येभ्यः समागताः महावैद्याः अपि असहायकतां प्रदर्शितवन्तः। राजकुमार्याः रोगः तु प्रतिदिनं वर्धते स्म।

'इतःपरं केनापि औषधेन पुत्री स्वस्था न भविष्यति' इति चिन्तयन् राजा दुःखसागरे निमग्नः। तदा मन्त्रिणः एकां सूचनां दत्तवन्तः यत् कुमुदिन्याः रोगं यः दूरीकर्तुं शक्तः भविष्यति तस्मै कुमुदिनी, अर्धं राज्यं च दातव्यम् इति।

जलप्रवाहेण नीयमानः तृणम् अपि उपकारकम् एव भावयति किल? तथैव राजा अपि मन्त्रिणां सूचनाम् अङ्गीकृतवान्। देशे विदेशेषु च तथैव सडिण्डिमघोषं वार्ता प्रसारिता।

एतां वार्तां श्रुत्वा बहवः वैद्याः आगत्य राजकुमारीं परीक्षितवन्तः। केचन तु रोगस्वरूपं निश्चेतुम् अशक्ताः प्रतिगतवन्तः। अन्ये केचन रोगस्वरूपं ज्ञातम् इति भावयन्तः औषधोपचारम् आरभ्य विफलाः सन्तः प्रतिगतवन्तः।

राजकुमारी दिने दिने कृशा भवन्ती दुर्बला जाता। पुत्र्याः आरोग्यम् एव सदा चिन्तयन् चन्द्रसिंहः अपि आहारविहारादिषु अनासक्तः सन् शय्याम् आश्रितवान्।

एतस्मिन् सन्दर्भे केदारनाथः इति कश्चित् युवकः वैद्यः तत्र आगतवान्। सः राजकुमार्याः नाडीं, हृदयस्पन्दनं, नेत्रं, रक्तं, जिह्वां, श्वासं चापि सुसूक्ष्मं परीक्ष्य रोगस्वरूपं निश्चितवान्।

सः महाराजसमीपं गत्वा उक्तवान्–"प्रभो! भवतः पुत्रीम् आरोग्यवतीं करिष्यामि इति मम दृढः विश्वासः अस्ति। तदर्थम् एकं मूलं नागपर्वततः आनेतव्यम्। यदि अनुमतिः, तं मूलम् आनेतुम् गच्छामि। सद्यःकाले रोगः इतोऽपि प्रवृद्धः यथा न भवेत् तथा औषधं ददामि" इति।

एतद्वचनं श्रुत्वा चन्द्रसिंहः अमृतधारया

स्नातः इव सन्तुष्टः। तत्क्षण एव गमनार्थम् अनुमतिं दत्तवान्। केदारनाथः नागपर्वतं गत्वा अपेक्षितं मूलं अन्विष्टवान्। तत् मूलं प्राप्तं चेत् राजकुमारी स्वस्था इत्येव। तीव्रप्रयत्नेन सः एकं तादृशं मूलं प्राप्तवान्। तेन एकस्य चिकित्सा कर्तुं शक्या आसीत्, तावदेव।

केदारनाथः 'राजकुमार्याः अस्वास्थ्यं मम वैद्यकीयज्ञानस्य परीक्षकम् इव आसीत्। इदानीं तु साफल्यप्राप्तौ मम विश्वासः आगतः। यतः अहं रोगनिवारकं मूलं प्राप्तवान् अस्मि' इति चिन्तयन् उत्साहेन 'चन्दनपुरम् आगतवान्।

यदा सः राजभवनस्य समीपे गच्छन् आसीत् तदा उद्यानपालकः वृद्धः सेवकः आर्तनादं कुर्वन् भूमौ पतितवान्। समीपस्थाः अन्ये परिचारकाः सम्भ्रमेण धावन्तः तत्र आगतवन्तः।

केदारनाथः अपि धावन् तत्र गतवान्। नाडीपरीक्षया सः ज्ञातवान् यत् प्राणाः निर्गमनमार्गे सन्ति इति। विचित्रं यत् राजकुमारी येन रोगेण पीडिता अस्ति तेनैव रोगेण एषः अपि पीडितः अस्ति। राजपुत्री कुमुदिनी तु राजोपचारकारणतः शय्यायाम् इतोऽपि जीवति। एषः कर्मकरः तु रोगेण बाध्यमानः अपि कार्यं कुर्वन् अन्तिमावस्थायाम् अस्ति।

केदारनाथः विलम्बम् अकुर्वन् नागपर्वततः आनीतं मूलं पेषयित्वा जले संयोज्य मूर्च्छां गतस्य उद्यानपालकस्य मुखे स्थापितवान्।

अर्धघण्टाभ्यन्तरे वृद्धः सचेतनः जातः।





केदारनाथेन उक्तं सर्वं श्रुत्वा चन्द्रसिंहः कोपावेशेन– "किं भोः, अत्र मम पुत्री जीवन्मरणावस्थायाम् अस्ति। भवान् तु अन्तिमदिनं गणयतः वृद्धस्य चिकित्सां कृतवान् किल? किं मम पुत्र्याः अपेक्षया तस्य प्राणाः श्रेष्ठाः? अन्यत् नास्ति इति जानन् अपि भवान् विद्यमानं मूलं अल्पस्य निमित्तम् उपयुक्तवान्। पुनः प्रयत्ने कृते अपि मूलं लभ्येत इति कः विश्वासः? तावत्पर्यन्तं मम पुत्री प्राणान् धरेत् वा न वा! भवान् अक्षम्यम् अपराधं कृतवान्" इति कठोरम् उक्त्वा "एतं द्रोहिणं शूलम् आरोपयन्तु" इति भटान् आज्ञापितवान्।

भटाः केदारनाथस्य हस्तौ पादौ च बद्ध्वा तं मरणपीठम् आरोपितवन्तः। एतत् दण्डनं द्रष्टुम् आगतं महाराजं केदारनाथः उक्तवान्– "प्रभो! भवता इदानीं शान्ततया चिन्तनीयम्। अहम् एकसप्ताहाभ्यन्तरे मूलम् आनेष्यामि। ततः पूर्वं राजकुमार्याः किमपि न भविष्यति। गुरुदेवस्य नामकथनपूर्वकम् अहं शपथं करोमि। यदि अहं वचनभ्रष्टः भवेयं तर्हि मां तदा शूलम् आरोपयत" इति।

केदारनाथस्य एतया प्रार्थनया अपि चन्द्रसिंहस्य कोपः न शान्तः। भटाः केदारनाथस्य कण्ठस्य समीपं रज्जुं नीतवन्तः।

तदा सः वृद्धः उद्यानपालकः आगत्य– "महाप्रभो! भवता यथा उक्तं, मम प्राणानां

सः मन्दं नेत्रे उन्मीलयन् परितः दृष्टवान्। क्रमशः उत्थाय प्राणरक्षकं केदारानाथं कृतज्ञताभावेन नमस्कुर्वन्- "वत्स! चिरं जीवतु" इति हृत्पूर्वकम् आशीर्वादं कृतवान्।

अत्र प्रवृत्ता घटना तत्क्षणे एव राजभवनम् अपि प्रविष्टा। राजकुमारी-निमित्तम् आनीतं मूलं समाप्तम् इत्यतः केदारनाथः पुनः अपि नागपर्वतं गन्तुं सिद्धः अभवत्। एतत्सन्दर्भे मूलं प्राप्तुं पूर्वापेक्षया द्विगुणितः परिश्रमः निर्वोढव्यः भवेत्। अधिकसमयः अपि अपेक्षितः एव। एषा वार्ता महाराजाय निवेदनीया इति। आलोचयन् केदारनाथः चन्द्रसिंह-महाराजस्य समीपं गतवान्।

विशेषमूल्यं नास्ति इति, तत् तु सत्यम् एव। एषः मदर्थं मूलस्य उपयोगं कृतवान्। अतः मां शूलम् आरोपयतु। एतस्य वचने विश्वासं प्रदर्शयन् एतस्मै गन्तुम् अनुमतिं ददातु'' इति अश्रूणि पातयन् दीनतया प्रार्थितवान्।

तदा केदारनाथः उद्वेगेन उक्तवान्– ''प्रभो! शूलारोपणार्थम् उपयुक्ताः भवन्तु इति उद्देशेन मया एतस्य प्राणाः न रक्षिताः। अतः केनापि कारणेन एषः शूलं न आरोपणीयः। मूलानयनार्थं अन्योऽपि अवकाशः दातव्यः इति पुनः अपि प्रार्थयामि। एतेन राजकुमार्याः एव हितं सिध्यति। 'वचनभ्रष्टः भवामि चेत् मां शूलम् आरोपयन्तु' इति पूर्वम् एव उक्तवान् अस्मि। राजकुमार्याः रोगतीव्रता स्मर्तव्या। मूलानयनार्थम् अन्यः अवकाशः अनुग्रहणीयः च'' इति।

मन्त्रिणः अपि महाराजं निवेदितवन्तः– ''अवकाशदानम् एव उचितः मार्गः इदानीम्'' इति। अन्ते राजा एतत् अङ्गीकृतवान्।

राजाज्ञानुसारं सेवकाः केदारनाथं बन्धविमुक्तं कृतवन्तः। केदारनाथः नागपर्वतं गत्वा महता प्रयत्नेन मूलम् अन्विष्य आनीतवान्, औषधोपचारम् आरब्धवान् च।

बहुकालतः राजकुमारीं बाधमानः रोगः दिनद्वयाभ्यन्तरे अपगतः अभवत्। प्रसन्नः राजा केदारनाथं गौरवेण पश्यन्



विशेषवसतिव्यवस्थाम् उपकल्पितवान्। सप्ताहाभ्यन्तरे राजकुमारी प्रकोष्ठे एव इतस्ततः सञ्चरन्ती सर्वैः सह संलपन्ती सन्तोषेण व्यवहरति स्म।

पूर्वतनघोषणानुगुणं राजकुमारीम् अर्धराज्यं च केदारनाथाय दातुं सिद्धः अभवत् राजा। 'केदारनाथस्य वसतिं गत्वा सः गौरवपूर्वकं शिबिकायाम् उपवेश्य आनेतव्यः' इति सः मन्त्रिणम् आदिष्टवान्। सवैभवं प्रचलिष्यमाणस्य पुत्र्याः विवाहस्य एव चित्रं महाराजस्य मनसि।

राजाज्ञानुसारं मन्त्री परिवारेण शिबिकया च सह केदारनाथस्य वासभवनं गतवान्। किन्तु केदारनाथः तत्र न आसीत्। 'सूर्योदयतः पूर्वम् एव गच्छामि' इति उक्त्वा

गन्तव्यस्थलम् असंसूच्य सः इतः निर्गतवान्' इति उक्तवान् भवनरक्षकः। मन्त्री निराशया प्रत्यागत्य महाराजाय एतां वार्तां निवेदितवान्। पुनः कदापि केदारनाथः राजधान्यां न दृष्टः।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! केदारनाथः वैद्यविद्यायाम् अद्वितीयः इति तु सुविदितम् एव। महावैद्यैः ज्ञातुम् अपि अशक्तं राजकुमार्याः रोगं सः दूरीकृतवान्। अपूर्वरोगस्य निवारकः सः मेधावी विज्ञानी च स्यात्। एतादृशः राजकुमारीम् अर्धराज्यं च परित्यज्य किमर्थं कुत्रापि गतवान्? किं सः आत्मानं सत्कारानर्हं भावितवान्? अथवा सः जन्मना एव विरक्तः? एतस्य उत्तरं जानन् अपि यदि न बदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्— "स्वार्थेच्छया केदारनाथः राजकुमार्याः चिकित्सां न कृतवान् इति तु स्पष्टम् एव। सः विरक्तः इत्यपि न। वस्तुतः तस्य निर्गमने चन्द्रसिंहस्य स्वार्थभावना एव कारणम् इति अहं चिन्तयामि। केदारनाथः उत्तमः वैद्यः। जीवस्य महत्त्वं सः जानाति। अतः एव महता प्रयत्नेन आनीतेन मूलेन सामान्यस्य वृद्धस्य उद्यानपालकस्य प्राणान् रक्षितवान्।

किन्तु राजा एतादृशं किमपि न जानाति। 'वृद्धस्य प्राणान् रक्षितवान्' इति कारणतः सः केदारनाथं शूलम् आरोपयितुम् आदिष्टवान्। एतादृशस्य स्वार्थपरस्य पुत्र्याः परिणयः नाम वैद्यकीयवृत्तेः तिलोकदानम् एव इति ज्ञातवान् केदारनाथः। सर्वेषु धर्मशास्त्रेषु अपि जीवरक्षणस्य विशेषमहत्त्वम् उक्तम् अस्ति। अतः एव केदारनाथः जनहित-कार्याणि कर्तुम् इच्छन्, आगमनकार्यं यदा सिद्धं तदा राजानम् अनुक्त्वा एव मौनं निर्गतवान्" इति।

एवं बदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# लघुमेघः

त्रिगर्तः कृषिप्रधानः देशः। तस्मिन् देशे सस्यानां फलानां च समृद्धिः। क्षीरादीनां समृद्धौ अपि न न्यूनता। अतः तत्रत्याः जनाः सुखेन जीवन्ति स्म। किन्तु तेषां कृषिः वृष्ट्याधारिता आसीत्। सौभाग्यवशात् वृष्टिकारकः वायुः काले वाति। अतः वृष्टिः अपि काले भवति।

त्रिगर्तदेशस्य कृषिकाः विविधान् देवान् पूजयन्ति स्म। किन्तु वृष्टिकारिणीं देवतां मेघान् वा ते न पूजयन्ति। पूजनं किं, कृतज्ञतापूर्वकं मेघाः नमस्करणीयाः इत्यपि ते न चिन्तयन्ति।

बहुकालतः एवम् एव प्रवर्तते। कृषिकाणां एतं व्यवहारं दृष्टवतां मेघानां तु असमाधानम्।

एकदा ते मेघाः सुदूरे प्रान्ते सम्मिलिताः। 'कृतघ्नानां वासभूमौ त्रिगर्ते एकः अपि जलकणः केनापि न पातनीयः' इति ते निश्चितवन्तः।

एतस्य परिणामतः तस्मिन् वर्षे त्रिगर्तदेशे वर्षर्तौ अतीतायाम् अपि वृष्टिः न जाता। वर्षाकालः ग्रीष्मकालः इव दृश्यते। तदा त्रिगर्तदेशीयाः कृषिकाः आशादृष्ट्या दैन्यपूर्वकम् आकाशं द्रष्टुम् आरब्धवन्तः। आकाशे अल्पः अपि मेघः न दृश्यते। कृषिकाणां कष्टं वर्णनातीतं जातम्।

एवं स्थिते कदाचित् मेघानां सन्तोषस्य अन्त्यं संवृत्तम्। यतः कश्चन लघुमेघः इतरमेघान् अनुक्त्वा एव त्रिगर्तदेशम् अगच्छत्। कांश्चन जलकणान् पातयित्वा प्रत्यागच्छत् च।

'वृष्टिः आरब्धा' इति चिन्तयन्तः त्रिगर्तदेशीयाः कृषिकाः गृहे संरक्षितानि धान्यानि क्षेत्रं नीत्वा बीजावापं कृतवन्तः। उत्साहेन इतराणि कृषिकार्याणि समारब्धवन्तः च।

एतत् दृष्ट्वा महामेघाः तं लघुमेघं तर्जितवन्तः– "किं भोः, भवतः कुचेष्टा? त्रिगर्तदेशे जलकणाः केनापि न पातनीयाः इति निर्णयं किं भवान् न जानाति? अस्मान् अनुक्त्वा भवान् किमर्थं तत्र गतवान्? कार्याकार्यविवेकः किञ्चिदपि नास्ति भवतः" इति।

"भवतां विवेकम् अहं जानामि। वस्तुतः मम कार्यं दृष्ट्वा सन्तोषः प्रकटनीयः आसीत्। पश्यन्तु तावत्। बीजत्वेन संरक्षितानि धान्यानि सूर्यतापेन यथा दग्धानि भवेयुः तथा कृतवान् अहम्। एतदर्थं भवद्भिः साधुवाक्यानि वक्तव्यानि आसन्" इति उक्तवान् सः लघुमेघः।

'त्रिगर्तदेशीयानां परिस्थितिः द्रष्टव्या' इति कुतूहलम् उत्पन्नं तेषां मेघानां मनसि। अतः ते त्रिगर्तदेशसमीपं गतवन्तः। तत्र जनाः दुःखेन तप्यमानाः आसन्। 'लघुवृष्ट्या सन्तुष्टाः ते कृषिकार्यं तु आरब्धवन्तः आसन्। किन्तु इदानीं सर्वाणि बीजानि नष्टप्रायाणि जातानि।

एतत् दुःखं सोढुम् अशक्ताः जनाः सन्तापेन 'मेघदेव! रक्षतु अस्मान्' इति प्रार्थयन्तः आसन्।

प्रार्थनामग्नं कृषिकाणां समूहं दृष्ट्वा सर्वे मेघाः सन्तुष्टाः। ते तं लघुमेघम् उक्तवन्तः– "भोः, इतःपरं ज्येष्ठानाम् अनुमतिं विना एवं न आचरतु। वयं कृषिकाणां कृतज्ञताभावं केवलम् इच्छामः। न तु तेषां बीजानां नाशम्" इति। अनन्तरं ते धाराकारेण जलवर्षणं कृतवन्तः।

'अस्माकं प्रार्थनया सन्तुष्टाः मेघाः जलवर्षणं कृतवन्तः' इति त्रिगर्तस्य कृषिकाः ज्ञातवन्तः। अतः ते प्रतिवर्षम् अपि मेघान् प्रार्थयितुम् आरब्धवन्तः। ततः आरभ्य त्रिगर्तदेशे पुनः अपि समृद्धिः। कदापि तत्र क्षामः न आगतः।

लघुमेघेन विनोदार्थं कृतं कार्यं लोकोपकारकम् एव सञ्जातम्। इतरे महामेघाः एतां वस्तुस्थितिं न ज्ञातवन्तः एव। इदानीम् अपि लघुमेघकुले उत्पन्नाः मेघाः वायुना सह क्रीडन्तः सर्वत्र सञ्चरन्तः लोकस्य परिस्थितिं महामेघान् निवेदयन्ति।






अस्माकं देशस्य वैशिष्ट्यम्

# चित्तोडदुर्गम्

राजास्थाने स्थितं चित्तोडदुर्गं अनेकेषां राजकुटुम्बीयानां निवासस्थानम् आसीत्, यच्च पञ्चाशत् फूट् उन्नते पर्वते सप्तशत-एकरे परिमिते प्रदेशे व्याप्तम् अस्ति। अस्मिन् दुर्गे पुराणपुरुषः भीमः किञ्चित्कालं निवासं कृतवान् आसीत् इति अपि श्रूयते।

चित्राङ्गः नाम मौर्यराजः सर्वप्रथमम् अत्र स्वकीयां राजधानीं निर्मितवान्। सः तस्य पर्वतस्य चित्रकूटम् इति नाम निश्चितवान्। तदेव नाम कालान्तरे चित्तोड् इति परिवर्तितम् अभवत्। तेन महाराजेन निर्मितं दुर्गं कालगर्भे लीनम् अभवत्।





अष्टमे शतके मेवारशासकानां रावल्वंशीयानां राजधानी अभवत् एतत् दुर्गम्। १३ शतके राणा रतनसिंहः मेवारशासकः अभवत्। तस्य पत्नी पद्मिनी जगदेकसुन्दरी। तां वशीकर्तुम् इच्छन् देहलीशासकः अल्ला उद्दीन् खिल्जी चित्तोडदुर्गस्य उपरि आक्रमणं कृतवान्।



किन्तु तदीयः सर्वविधः अपि प्रयत्नः विफलः एव। सः पर्वतमूले वसतिं कृत्वा 'पद्मिनीप्रतिबिम्बं वा द्रष्टुम् इच्छामि' इति रतनसिंहं प्रार्थितवान्। रतनसिंहः एतत् अङ्गीकृतवान्। पद्मिनीप्रतिबिम्बं दृष्ट्वा प्रतिगच्छन्तं खिल्जिम् अनुसृत्य रतनसिंहः दुर्गात् बहिः आगतवान्। तदा शिलान्तरिताः खिल्जीसैनिकाः रतनसिंहं बद्धवन्तः।

''राज्ञी पद्मिनी मम समीपम् आगच्छेत्। अन्यथा रतनसिंहः मरणं प्राप्स्यति'' इति खिल्जी पद्मिन्यै वार्तां प्रेषितवान्। 'सप्तशतसखीभिः सह अहं भवतः समक्षम् आगच्छामि' इति वार्तां प्रेषितवती पद्मिनी। परमसन्तुष्टः खिल्जी तस्याः प्रतीक्षायां स्थितवान्। दुर्गतः शिबिकाः प्रस्थिताः।





यदा शिबिकाः खिल्जीशिबिरसमीपम् आगताः तदा शिबिकाभ्यः १४०० सैनिकाः खड्गं स्वीकृत्य बहिः आगतवन्तः। शिबिकावाहकाः अपि वेषान्तरधारिणः सैनिकाः। घोरं युद्धं प्रवृत्तम्। असङ्ख्याः खिल्जीसैनिकाः मृताः। रतनसिंहः बन्धविमुक्तः अभवत्। खिल्जी कथञ्चित् सजीवं पलायनं कृतवान्।

अपमानितः खिल्जी देहलीं गतवान्। एकवर्षाभ्यन्तरे पुनः अपि चित्तोडदुर्गस्य उपरि आक्रमणं कृतवान्। राजपुत्रादयः धैर्येण साहसेन च युद्धं कृत्वा वीरस्वर्गं प्राप्तवन्तः। राज्ञी पद्मिनी अन्याः वीरवनिताः च शत्रुभ्यः आत्मानं रक्षन्त्यः अग्निकुण्डं ज्वालयित्वा तत्र प्राणत्यागं कृतवत्यः।





कीर्तनकलावित् कृष्णभक्ता मीराबाई चित्तोडशासकं भोजराजं परिणीतवती आसीत्। राजाः तस्याः कृते अपूर्वं कृष्णमन्दिरं निर्मापितवान् आसीत्। कृष्णविग्रहस्य पुरतः अहर्निशं गायन्ती मीरा गाने एव तन्मयतां प्राप्नोति स्म।

एकदा अल्पवयस्कं युवराजं मारयितुम् इच्छन् कश्चन क्रूरी दुर्गं प्रविष्टवान्। तदा पन्नानामिका सेविका स्वशिशुं युवराजत्वेन प्रदर्श्य वास्तविकं युवराजं सुरक्षितं स्थलं नीत्वा रक्षितवती।





इदानीं चित्तोडदुर्गं शिथिलावस्थायाम् अस्ति। तथापि तत्रत्यानि भवनानि दर्शकान् आकर्षन्ति एव। १४४८ तमे वत्सरे महाकुम्भराणामहोदयेन निर्मितः विजयस्तम्भः तत्र विशिष्यते। गुजरातशासकेन कुतुबुद्दीन् षा यत् जितः तन्निमित्तं विजयस्मारकः एषः स्तम्भः निर्मितः।

अत्रत्यं ब्रह्माण्डवत् अतिविशालं महाकुम्भराणासम्बन्धि भवनं विशेषकौशलेन सुरक्षादृष्ट्या च निर्मितम् अस्ति। दुर्गस्य अन्तः तत्र तत्र भूगर्भमार्गाः सुरङ्गाः च उपलभ्यन्ते। एतस्य भवनस्य भूगर्भमण्डपे एव राज्ञी पद्मिनी प्राणत्यागं कृतवती।





अत्रत्येषु पुरातनालयेषु प्रसिद्धं तु कालिकामन्दिरम्। कालिकामातरम् एतस्य प्रदेशस्य अधिदेवतां भावयन्ति जनाः। बहुपूर्वम् एतत् मन्दिरं सूर्यस्य आसीत् इति केचन भावयन्ति।



# अदृष्टफलम्

कस्मिंश्चित् ग्रामे एकः कृषिकः आसीत्। तस्य एकः पुत्रः। पुत्रस्य बाल्ये एव माता दिवङ्गता। कालान्तरे पिता अपि केनचित् रोगेण पीडितः। प्रतिदिनं सः रोगः वर्धते स्म।

मरणं सन्निहितम् इति ज्ञात्वा कदाचित् पिता पुत्रम् आहूय उक्तवान्– "अये पुत्र, अहं दरिद्रः इति कारणतः भवतः कृते किमपि सम्पादयितुं न शक्तवान्। किन्तु भवान् मृत्तिकां स्पृशति चेत् अपि तत् सुवर्णं भवेत् इति मनःपूर्वकम् आशीर्वादं कर्तुम् शक्नोमि। तावदेव" इति।

केषुचित् दिनेषु एव पिता दिवङ्गतः। पुत्रः स्वमातापितरौ स्मरन् श्रमेण कृषिकार्यं कर्तुम् आरब्धवान्। तस्मिन् कृषिकार्ये शीघ्रम् एव साफल्यं प्राप्तवान् सः। तस्य स्वकीयम् एकं द्राक्षावनम् आसीत्। अन्येषां द्राक्षावनापेक्षया एतस्य एव उत्तमं फलभरितं च आसीत्।

कालान्तरे धनिकः सः फलवनानि क्रीतवान्। फलानां वाणिज्यार्थं नौकाः अपि क्रीतवान्। मत्स्यवाणिज्यम् आरब्धवान्। तैलयन्त्रम् अपि क्रीतवान्। तैलेन मत्स्यवाणिज्येन च महान्तं लाभं प्राप्तवान् च।

शीघ्रातिशीघ्रम् एव सः नगरे महान् धनिकः सञ्जातः। सः यस्मिन् कस्मिन् अपि कार्ये उद्युक्तः भवतु, तत्र साफल्यं प्राप्नोति। धनिकाः तस्य सहवासं कर्तुम् इष्टवन्तः। ऐश्वर्येण सन्तुष्टः एषः कस्यचित् धनिकस्य सुन्दरीं पुत्रीं परिणीय विना क्लेशं सुखं जीवितुम् आरब्धवान्।

एवं स्थिते अदृष्टविषये कदाचित् एतस्य शङ्का उत्पन्ना। सः स्वकीयं प्रियमित्रम् उक्तवान्– "मित्र, वस्तुतः वक्तव्यं चेत् मम शक्तिसामर्थ्यम् अतिरिच्य अपि अदृष्टं

"ग्रीक्देशस्य जानपदकथा"



मां गृहीतम् अस्ति इति भाति। अतः मम तु भयम्। यतः सुलभतया आगता लक्ष्मीः तथैव गच्छेत् अपि। दुरदृष्टदेवी मयि कुपिता भवेत् अपि। अतः तस्याः तृप्त्यर्थं तादृशं किमपि कार्यं करणीयम्, येन कार्येण काचित् हानिः सम्भवेत्। कीदृशं कार्यं कृतं चेत् हानिः भवेत्? वदति वा?'' इति।

सः स्नेहितः क्षणकालं विचिन्त्य पृष्टवान्– ''खर्जूरं कुतः आगच्छति?'' इति।

''कैरोनगरतः किल?'' इति उक्तवान् प्रथमः।

''पुनः किमर्थं चिन्ता? अत्र लभ्यमानं खर्जूरं यावत् शक्यं तावता अधिकमूल्येन क्रीत्वा उष्ट्राणां द्वारा कैरोनगरं नयतु। तत्र यावत् शक्यं तावता न्यूनमूल्येन विक्रयण करोतु। तेन भवान् निश्चयेन हानिं प्राप्नोति'' इति उपायम् उक्तवान् सः स्नेहितः।

मित्रस्य अभिप्रायः समीचीनः एव इति चिन्तितवान् एषः। तद्दिने एव नगरं गत्वा वणिजां समीपे विद्यमानानि सर्वाणि खर्जूरफलानि क्रीतवान्। मूल्यम् अपि अधिकम् एव दत्तवान्। अनन्तरं कांश्चित् उष्ट्रान् क्रीतवान्। तेषां द्वारा कैरोनगरं प्रति प्रस्थितवान् च।

बहुदिनानि मरुभूमौ प्रयाणं कुर्वन् सः कदाचित् विश्रान्त्यर्थं मरुभूमौ शिबिरं स्थापयित्वा स्थितवान्। तस्मिन् समये एव श्वेताश्वारूढः ईजिप्तदेशस्य राजा तत्र आगतवान्। तेन सह तस्य परिवारजनाः, केचन सैनिकाः च आसन्। सैनिकानां हस्ते आयुधानि आसन्।

एषः महाराजं नमस्कृत्य पृष्टवान्– ''प्रभो, एते सैनिकाः आयुधानि धृतवन्तः। कः विशेषः इति अहं ज्ञातुं शक्नोमि वा?'' इति।

तदा राजा ''किमिति वदामि? अद्य प्रातः अश्वारूढः अहं विहारार्थम् एतस्यां दिशि आगतवान्। मम अङ्गुलीयकम् अत्रैव कुत्रापि पतितम्। तत् अङ्गुलीयकं मम विवाहस्य, प्रीतिपात्रं च। अतः तस्य अन्वेषणार्थम् अहम् अत्र सिकतां शोधयन्

अस्मि। तदस्तु, भवान् कैरोनगरं गच्छति वा? तत्र किं विशेषकार्यं भवतः?" इति पृष्टवान्।

"खर्जूरविक्रयणार्थं कैरोनगरं गच्छन् अस्मि" इति वदन् एषः उष्ट्राणाम् उपरि विद्यमानान् खर्जूरकण्डोलान् महाराजाय प्रदर्शितवान्।

आश्चर्यचकितः राजा उक्तवान्— "कैरोनगरं गत्वा खर्जूरविक्रयणं करोति वा? अत्र पश्यतु। समीपे एव खर्जूरवृक्षाः सन्ति। कियन्ति फलानि सन्ति! एकस्मिन् वृक्षे विद्यमानानि फलानि उत्पाटयितुम् एकं दिनम् अपि न पर्याप्तम्। भवान् कैरोनगरं नयति चेत् एकं नाणकम् अपि प्राप्तुं न शक्नोति। महती हानिः भविष्यति। उपहासार्हः भविष्यति च!" इति।

एतेन वचनेन महाराजेन सह विद्यमानाः सर्वे उच्चैः हसितवन्तः।

एषः "अहं नष्टार्थम् एव सिद्धः अस्मि। हानिः भविष्यति इति भवन्तः वदन्ति। किन्तु मम तु हानिः न भवति किल इति एव चिन्ता। यतः मरणसमये मम पिता 'मृत्तिकां स्पृशति चेत् अपि तत् सुवर्णं भवति' इति आशीर्वादं कृतवान् अस्ति।" इति वदन् एकमुष्टिमितां सिकतां स्वीकृतवान्।

सः यदा मुष्टिम् उद्घाटितवान्, तदा तस्य हस्ते सिकतानां मध्ये सुवर्णस्य उङ्गुलीयकम् आसीत्।

"मम नष्टम् अङ्गुलीयकम् एतत् एव" इति उक्तवान् राजा आश्चर्येण।

एतस्य अदृष्टेन अङ्गुलीयकं सुलभतया लब्धम् इति सन्तोषेण राजा खर्जूर-मूल्यापेक्षया अधिकमूल्ययुक्तेन उपायनेन तं सत्कृत्य प्रेषितवान्।

हानिम् अनुभवितुं श्रमेण प्रस्थितः एषः ततोऽपि द्विगुणितं लाभं प्राप्य स्वग्रामं प्रतिगतवान्।

विद्यमानानि खर्जूरफलानि सर्वेभ्यः विना मूल्यं वितरितवान् सः।' पितुः आशीर्वादप्रभावेण दुरदृष्टं समीपम् अपि न आगच्छति इति तस्य मनसि दृढः विश्वासः उत्पन्नः।



# प्रतियुक्तिः

गोपीनाथः कश्चन महाकृपणः। यद्यपि तस्य समीपे यथेष्टम् ऐश्वर्यम् अस्ति, तथापि सः धनव्ययं न करोति। पुत्रं रमेशम् अपि कृपणतां पाठयति। तदीयम् एतादृशं व्यवहारं दृष्ट्वा जनाः खेदम् अनुभवन्ति स्म।

एकदा गोपीनाथः रमेशाय वस्त्राणि सीवयितुम् इच्छन् सौचिकस्य समीपं गतवान्। वस्त्रं दत्त्वा प्रत्यागच्छन् सः 'सीवनशुल्कम् अदत्त्वा कथं वा सौचिकः वञ्चनीयः?' इति आलोचनं कृतवान्। तदनुगुणं पुत्राय उपायं सूचितवान् च। किन्तु उत्सवदिने अपि पुत्रः पुरातनं वस्त्रम् एव धृतवान् आसीत्। तत् दृष्ट्वा गोपीनाथः पुत्रं पृष्टवान्– "किं भोः? नूतनं वस्त्रं न आनीतवान् वा?" इति।

"सीवनशुल्कं यावत् न ददाति तावत् वस्त्रं न ददामि इति सौचिकः उक्तवान्" इति उक्तवान् रमेशः।

"अहम् अल्पवयस्कः बालकः। मम हस्ते दत्तं चेत् धनं मार्गे नष्टं भवेत् इति चिन्तयन् पिता मम हस्ते धनं न दत्तवान् इति भवान् सौचिकं न उक्तवान् वा?" इति पृष्टवान् गोपीनाथः।

"तथैव उक्तवान् अहम्। किन्तु सः– 'यावत् भवान् धनं सुरक्षितम् आनेतुं शक्नोति तावत् अहं प्रतीक्षां करोमि' इति उक्त्वा वस्त्रं न दत्तवान् एव" इति उक्तवान् रमेशः। अनन्योपायः गोपीनाथः सौचिकाय धनं दत्त्वा पुत्रस्य वस्त्राणि प्रत्यानीतवान्।





# उत्तररामायणम्

रावणः वरुणलोकात् प्रस्थाय स्वीयविमानेन लङ्काम् उद्दिश्य प्रत्यागच्छन्, मार्गे दृष्टाः अनेकाः सुन्दरकन्याः वशीकृतवान्। एवंरीत्या वशीकृताः सहस्राधिककन्याः तेन पुष्पकविमाने सङ्गृहीताः। सर्वाः ताः कन्याः बहुधा रोदनं कृतवत्यः, विविधरूपशापैः रावणं भर्त्सितवत्यः च। तासां वचनानि शृण्वन् अपि रावणः, ताः तृणाय मन्यमानः तूष्णीं स्थितवान्।

रावणः लङ्कां प्राप्य यदा स्वीयभवनं समागतवान्, तदा तस्य भगिनी शूर्पणखा उच्चैः रोदनं कुर्वती तस्य पुरतः आगत्य "किं भोः अग्रज! सर्वेषां कालकेयानां हननसमये मम पतिम् अपि भवान् हतवान् किल? एतत् उचितं वा? मदर्थं भवान् एव तम् अन्विष्य आनीतवान् आसीत्। इदानीं भवान् एव तं हत्वा मां विधवां कृतवान् किल? स्वीयः आवुत्तः इति किञ्चित् अपि परिज्ञानं न आसीत् वा? इतःपरं मम का गतिः?" इति निन्दितवती।

"वत्से, गतं न शोचयेत् प्राज्ञः इति ज्येष्ठानां वचनं जानाति किल? एषः स्वकीयः परकीयः इति भेदज्ञानं युद्धोन्मत्तस्य यस्य कस्यचित् भवेत् वा? इतःपरं भवती खरस्य समीपे तिष्ठतु। इदानी सः खरः चतुर्दशसहस्रसङ्ख्याकानां राक्षसानां नायकः भवति। दूषणं तस्य अनुचरं करोमि। एतौ द्वौ भवतीं रक्षतः। खरः, दूषणः, अन्ये राक्षसाः च मम आज्ञानुसारेण इदानीं दण्डकारण्यस्य रक्षणार्थं गमिष्यन्ति। भवती अपि तैः सह

६. मेघनादविजयः।



गत्वा, स्वेच्छया विहरन्ती कालं यापयतु। ते सर्वे भवतीं प्रति यथा विधेयाः भवेयुः, तथा व्यवस्थां करोमि'' इति उक्तवान् रावणः।

तदनुसारेण शूर्पणखा खरदूषणभ्यां सह दण्डकारण्यं गत्वा, तत्र सन्तोषेण कालं यापयति स्म।

अनन्तरं रावणः निकुम्बिलवनं गत्वा, तत्र यज्ञकार्ये मग्नं स्वीयकुमारं मेघनादं दृष्ट्वा, अत्यानन्देन तं समालिङ्ग्य ''वत्स, भवान् अत्र कीदृशं विशेषकार्यं कुर्वन् अस्ति? कोऽपि महायज्ञः इव दृश्यते। कीदृशः यज्ञः एषः?'' इति पृष्टवान्।

तस्य प्रश्नस्य उत्तरं गुरुः शुक्राचार्यः एव दत्तवान्– ''भोः रावणेश्वर, भवतः एषः कुमारः सप्त यज्ञान् कर्तुं प्रवृत्तः अस्ति। अग्निष्टोमः, अश्वमेधः, राजसूयः, गोमेधः, वैष्णवः इति यज्ञान् तथा अत्यन्तदुस्साध्यं महेश्वरयज्ञम् अपि कृत्वा शिवं प्रीणयित्वा, तस्य अनुग्रहतः कामगमनसमर्थं रथं, सर्वत्र तमसः उत्पादनसमर्थां मायाशक्तिं, प्रबलशक्तियुक्तान् धनुर्बाणान् च प्राप्तवान् अस्ति। इदानीं सप्तमः तथा अन्तिमः यज्ञः आरब्धः अस्ति। एतस्य समाप्त्यनन्तरं भवतः कुमारस्य पुरतः स्थातुं त्रिषु लोकेषु अपि कोऽपि समर्थः न भविष्यति'' इति।

शुक्राचार्यस्य वचनानि श्रुत्वा रावणः सुतरां तृप्तः न अभवत्। ''भवता कारितं कार्यं सर्वथा अयुक्तम् अस्ति। एतत्सर्वम् अस्माकं गौरवस्य हानिकारणम् अस्ति। भवान् अस्माकं गुरुः सन् अपि अस्माकम् आजन्मशत्रूणाम् इन्द्रादीनाम् अर्चनार्थं द्रव्याणि व्यर्थीकृतवान्। अद्यावधि सम्पादितेन पुण्येन एव अलम्'' इति उक्त्वा रावणः मेघनादेन सह ततः निर्गतवान्।

तदा विभीषणः रावणं काञ्चन दुर्वार्तां कथितवान्। रावणस्य काचन अनुजा कुम्भीनसानामिका बाला रावणस्य गृहे वर्धते स्म। रावणस्य मातुः ज्येष्ठपितृव्यः माल्यवान्। तस्य माल्यवतः दौहित्री आसीत् एषा कुम्भीनसा। यदा रावणः दिग्विजयार्थं देशान्तरं गतवान् आसीत्, तदा मधुनामकः कश्चन राक्षसः रक्षकरहितं भवनं प्रविश्य कुम्भीनसाम् अपहृत्य नीतवान्। तस्मिन् समये कुम्भकर्णः गाढनिद्रामग्नः सन् बाह्यज्ञानशून्यः आसीत्। विभीषणः

जलान्तर्गतः भूत्वा तपः आचरन् आसीत् अतः मधुं वारयितुं तत्र कोऽपि न आसीत्

स्वयं रावणः अद्यावधि असङ्ख्यकन्याः अपहृत्य आनीतवान् आसीत्। एतादृशकार्ये सः कमपि दोषं न दृष्टवान्। किन्तु इदानीं स्वीयाम् अनुजां कश्चन अपहृत्य नीतवान् इति वार्तायाः श्रवणसमनन्तरम् एव सः क्रोधतप्तः अभवत्। सः झटिति कुम्भकर्णं निद्रातः जागरितवान्। राक्षसवीरान् आहूय, युद्धार्थं सर्वं सज्जीकृत्य, मधोः नगरं मधुपुरं प्रति तस्य आक्रमणार्थं प्रस्थितवान् च।

स्वीयपतिं हन्तुं रावणः महत्या सेनया सह आगमिष्यति इति ज्ञात्वा कुम्भीनसा, अपरिमितभीत्या रावणस्य समीपम् आगत्य "अग्रज, भवतः आवुत्तं मधुं हत्वा मां विधवां करोति वा? मास्तु, तथा न करोतु" इति प्रार्थितवती।

रावणः कुम्भीनसायाः दैन्यभावं दृष्ट्वा दयार्द्रः भूत्वा "अस्तु, चिन्तां न करोतु। अहं भवत्याः पतिं न हनिष्यामि। सः कुत्र अस्ति? प्रदर्शयतु। अहम् इदानीं देवताः जेतुं स्वर्गं गमिष्यामि। तम् अपि मया सह नेष्यामि" इति उक्तवान्।

अग्रजस्य वचनं श्रुत्वा कुम्भीनसा अत्यानन्देन पत्युः मधोः समीपं गत्वा "मम अग्रजः इदानीं शान्तः जातः। देवताभिः सह युद्धं कर्तुं भवन्तम् अपि नेतुम् इच्छति। शीघ्रं सज्जः भवतु। मम अग्रजस्य स्नेहः सर्वदा कल्याणाय भवति। एतादृशम् अवकाशं न त्यजतु" इति उक्तवती।



मधुः रावणस्य समीपम् आगत्य, अर्घ्यपाद्यादिभिः तं सत्कृत्य, आदरपूर्वकं तं पूजितवान्।

रावणः तस्यां रात्रौ आवुत्तस्य आतिथ्यं सन्तोषेण स्वीकृत्य, परेद्युः ततः प्रस्थाय कैलासस्य तं भागं प्राप्तवान्, यत्र वैश्रवणः वसति स्म। सः सायङ्कालः आसीत्। अतः रावणः सेनया सह तत्रैव स्थितवान्।

ज्योत्स्नामयी सा रात्रिः अतीव मनोहरी आसीत्। रावणः पर्वते एकत्र उपविश्य, ज्योत्स्नायां दृश्यमानं रम्यं परिसरप्रदेशं पश्यति स्म। इदानीं रावणस्य मनसि अवर्णनीयः उत्साहः आसीत्। तथैव यां काञ्चित् न्यूनताम् अपि सः अनुभवति स्म।

तस्मिन् समये सर्वासु अप्सरस्सु



अत्युत्तमा रम्भादेवी निद्रामग्नायाः रावणसेनायाः मध्यतः चलन्ती एतत्पार्श्वम् आगतवती। सा विविधैः दिव्याभरणैः अलङ्कृता आसीत्। किं च कण्ठे पुष्पमालिकां, शिरसि मन्दारपुष्पाणि, मुखस्य उपरि कृष्णवर्णीयम् अवगुण्ठनवस्त्रम्।

साक्षात् लक्ष्मीदेवी इव शोभमानां तां दृष्ट्वा रावणः स्वस्थानतः उत्थाय, शनैः गत्वा तस्याः हस्तं गृहीत्वा ''भवती इदानीं कस्य समीपं गच्छन्ती अस्ति? कः सः भाग्यवान्? अद्वितीयं मां पश्यतु। मम अपेक्षया अपि श्रेष्ठः त्रिषु लोकेषु कोऽपि नास्ति। ईदृशः अहम् अञ्जलिबद्धः भूत्वा भवतीं प्रार्थये, मम समीपम् आगच्छतु'' इति उक्तवान्।

तस्य वचनानि श्रुत्वा भीत्या कम्पमाना रम्भा ''मां प्रति भवतः एतादृशवचनानि न उचितानि। अन्य यः कोऽपि मां पीडयति चेत्, भवता अहं रक्षणीया। अहं भवतः स्नुषासदृशी। भवतः अग्रजस्य पुत्रः नलकूबरः मां प्रतीक्षमाणः अस्ति। तम् एव परिणेतुम् अहम् इच्छामि। अन्यं कमपि न इच्छामि। परमपूज्याय भवते नमस्करोमि। कृपया मां त्यजतु'' इति प्रार्थितवती।

तथापि रावणः तस्याः प्रार्थनाम् अगणयन् तां बलात् आकृष्य अवमानितवान्।

अनन्तरं रम्भा महता दुःखेन, लज्जया, भयेन च कम्पमाना नलकूबरस्य समीपं गत्वा, तस्य पादयोः पतित्वा, रावणेन कृतम् अधर्माचरणं निवेदितवती।

तदा नलकूबरः कोपावेशेन अत्युग्रः भूत्वा अञ्जलौ जलं गृहीत्वा ''इतः परं यां कामपि अनिच्छन्तीं नारीम् एषः रावणः पीडयति चेत्, एतस्य शिरः सहस्रधा छिन्नं भविष्यति'' इति उच्चस्वरेण शप्तवान्। सः शापध्वनिः सर्वत्र प्रतिध्वनितः अभवत्।

तस्य शापस्य वार्तां श्रुत्वा रावणः तटस्थः अभवत्। तदारभ्य रावणः स्त्रीणां विषये स्वीयं दुर्व्यवहारं त्यक्तवान्।

रावणः कैलासतः प्रस्थाय स्वीयां सेनां स्वर्गं प्रति नीतवान्। स्वर्गस्य चतस्रः अपि दिशः आक्रम्य राक्षससेनाः स्थिताः सन्ति इति वार्तां श्रुत्वा इन्द्रः यद्यपि विजयस्य

आशां त्यक्तवान्, तथापि युद्धार्थं सज्जीकर्तुं देवगणान् आज्ञापितवान्।

रावणः असाधारणः इति विषयं जानन् इन्द्रः विष्णोः समीपं गत्वा "रावणः स्वर्गस्य उपरि आक्रमणं कृतवान् अस्ति। इदानीं मया किं करणीयम्? पूर्वं यदा यदा महान्तः राक्षसाः स्वर्गं वशीकर्तुम् आगताः, तदा तदा भवान् तान् सर्वान् लीलया पराजितवान्। इदानीम् अपि भवान् चक्रधारी भूत्वा युद्धार्थम् आगच्छति चेत्, स्वर्गस्य रक्षणं भवेत्। भोः देवदेव! भवन्तं शरणम् आगतवान् अस्मि। आज्ञापयतु भवान्" इति अञ्जलिबद्धः भूत्वा प्रार्थितवान्।

"भोः इन्द्र, रावणेन सह युद्धं कर्तुम् एषः न उचितः कालः। तस्य वरबलं कीदृशम् इति जानाति किल? इदानीं मम हस्तेन सः मरणं न प्राप्स्यति। तस्य आयुः इतोऽपि किञ्चित् अवशिष्टम् अस्ति। अतः इदानीं भवान् एव तं सम्मुखीकरोतु। भीतिः मास्तु" इति उक्तवान् विष्णुः।

अन्ते रावणस्य देवतानां च मध्ये महत् युद्धं प्राचलत्। रावणस्य पितामहः सुमालिः रावणपक्षे सेनानायकः आसीत्। एतस्मिन् युद्धे तं सुमालिं सावित्रनामकः वसुः मारितवान्। एतेन राक्षससेनायां महान् कोलाहलः उत्पन्नः। भीताः असङ्ख्याकाः राक्षसाः युद्धे मृताः। इन्द्रः महत् युद्धं कृत्वा सजीवं रावणं बद्ध्वा वशीकृतवान्। एतादृशपरिस्थितिं रावणः पूर्वं कदापि



स्वप्नेऽपि न चिन्तितवान् आसीत्।

एतं वृत्तान्तं ज्ञात्वा मेघनादः स्वीयमायाविद्याप्रयोगेण अदृश्यः सन् एव युद्धं कुर्वन् इन्द्रं बन्धितवान्। स्वीयं पितरं रावणं बन्धमुक्तं कृतवान् च। अनन्तरं "इदानीं युद्धं समाप्तम्। वयम् एव जयं प्राप्तवन्तः। पश्यन्तु पश्यन्तु, इन्द्रः अस्माकं वशीभूतः अस्ति। तात, इतःपरं भवान् त्रीन् अपि लोकान् यथेच्छं शासितुम् अर्हति" इति उक्तवान्।

एवंरीत्या मेघनादः इन्द्रं जितवान् इति कारणेन सः इन्द्रजित् इति नामधेयं प्राप्तवान्। मेघनादेन वशीकृतम् इन्द्रं गृहीत्वा रावणः पुत्रेण सह लङ्कां प्रत्यागतवान्।



इन्द्रं बन्धविमुक्तं कर्तुं देवाः ब्रह्मणा सह लङ्कां गतवन्तः। लङ्कानगरे महासभायाम् उपविष्टं रावणं दृष्ट्वा ब्रह्मा "भवतः पुत्रस्य पराक्रमः अनुपमः अस्ति। तं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि। अद्य आरभ्य भवदीयः पुत्रः इन्द्रजित् इति प्रख्यातः भूत्वा आचन्द्रार्कस्थायिनीं कीर्तिं प्राप्नोति। तं जेतुं समर्थः कोऽपि नास्ति। तस्य साहाय्येन भवान् देवताः जितवान्। पूर्वं मेघनादः देवताः सन्तोषयितुं यज्ञान् कृतवान्। अतः इदानीं भवता इन्द्रः बन्धविमुक्तः करणीयः" इति उक्तवान्।

"हे ब्रह्मन्, प्रियपितामह, इन्द्रः अवश्यं मोचयितव्यः इति चेत्, मह्यम् अमरत्वं ददातु" इति पृष्टवान् इन्द्रजित्।

"वत्स, इन्द्रजित्, एतस्मिन् ब्रह्माण्डे कोऽपि प्राणी परिपूर्णम् अमरत्वं प्राप्तुं न अर्हति" इति उक्तवान् ब्रह्मदेवः।

"एवं तर्हि अहम् अपि परिपूर्णम् अमरत्वं प्राप्तुं न शक्नोति चेत् मास्तु नाम। किन्तु अहं प्रतिदिनं भवतः तृप्तिः यथा भवेत्, तथा हविषा मन्त्रैः च अग्नेः अर्चनां करिष्यामि। यदा अहं युद्धार्थं गच्छामि, तदा अश्वसहितः रथः अग्निभूमितः आगच्छेत्। तस्मिन् रथे यावत्पर्यन्तम् अहम् उपविशामि, तावत्पर्यन्तं मम अमरत्वम् अस्तु। मम मरणं भवेत् चेत्, अग्नेः अर्चनातः पूर्वमेव भवेत्, अनन्तरं न। एषः एव मया प्रार्थ्यमानः वरः। कृपया एतेन वरेण माम् अनुगृह्णातु" इति प्रार्थितवान् इन्द्रजित्।

ब्रह्मणा यदा 'तथा अस्तु' इति अङ्गीकृतं, तदा एव इन्द्रः विमोचनं प्राप्तवान्। अनन्तरं सर्वाः देवताः इन्द्रेण सह तात्कालिकं सन्तोषं प्राप्य, स्वर्गं गत्वा कालं निरीक्षमाणाः आसन्।

युद्धोन्मत्तः रावणः यदा भूलोके पर्यटनं कुर्वन् आसीत्, तदा तत्र तत्र अपजयम् अपि अनुभूतवान्। तं विषयम् अपि महामुनिः अगस्त्यः रामं कथितवान्।

सहस्रबाहुं कार्तवीर्यार्जुनं जेतुम् इच्छन् रावणः स्वीयराक्षससेनया सह तस्य राजधानीं माहिष्मतीनगरीं गतवान्। किन्तु तत्र रावणः ज्ञातवान् यत् कार्तवीर्यार्जुनः स्वीयपत्नीभिः सह जलक्रीडार्थं नर्मदानदीं गतवान् इति।

अनुचरसहितः रावणः अपि नर्मदानदीं गत्वा तत्र शिवपूजां कर्तुं नद्याः तीरे उपविष्टवान्। तस्य सचिवाः पूजार्थं पुष्पाणि आनीय रावणस्य पुरतः राशीकृतवन्तः।

रावणस्य समीपे सर्वदा सुवर्णेन कृतं एकं शिवलिङ्गं भवति स्म। इदानीं रावणः नद्याः तीरे एकं मृत्पीठं निर्माय, तदुपरि शिवलिङ्गं प्रतिष्ठाप्य, अर्चनां कृत्वा, स्तुतिसहितं नर्तनं कर्तुम् आरब्धवान्।

नर्मदानदी पूर्वतः पश्चिमदिशं प्रति प्रवहति। तादृशी नदी इदानीं सहसा पश्चिमतः पूर्वदिशं गन्तुम् उद्युक्ता। अपि च प्रतिक्षणं प्रवाहः वर्धते स्म। पूजासमये रावणेन अर्पितानि पुष्पाणि तेन प्रवाहेण दूरं नीतानि, तथा तत्र तत्र प्रक्षिप्तानि। एतत् दृष्ट्वा रावणः अत्याश्चर्यम् अनुभवन्, परितः दृष्ट्वा क्षणकालं यावत् तूष्णीं स्थितवान्।

तदा सहसा तस्य मनसि किञ्चित् स्फुरितम्। झटिति रावणः हस्तसङ्केतेन शुकसारणौ आहूय, नर्मदानद्याः विरुद्धदिशि गमनस्य कारणं ज्ञात्वा आगन्तुम् आज्ञापितवान्।

तौ यदा किञ्चित् दूरं गतवन्तौ, तदा स्वीयपत्नीभिः सह सन्तोषेण जलक्रीडामग्नं कार्तवीर्यार्जुनं दृष्टवन्तौ। सः स्वीयैः सहस्रबाहुभिः नद्याः प्रवाहं स्थगयित्वा, यथा सा नदी विरुद्धदिशि प्रवहेत् तथा कृतवान् आसीत्।



तत् दृष्ट्वा चकितौ शुकसारणौ प्रत्यागत्य, तां वार्तां रावणं निवेदितवन्तौ। ताभ्यां वर्णितः महावृक्षसदृशः मनुष्यः कार्तवीर्यार्जुनः एव स्यात् इति चिन्तयन् रावणः युद्धार्थं प्रस्थाय, तस्मिन् भागे स्थितान् कार्तवीर्यार्जुनस्य सचिवान् "रावणः युद्धार्थम् आह्वयति इति जलक्रीडामग्नं भवतां महाराजं कथयन्तु" इति उक्तवान्।

"युद्धार्थम् एषः एव समयो वा? महाराजः स्त्रीभिः सह जलक्रीडामग्नः अस्ति। एतस्मिन् समये युद्धाह्वानं उचितं वा? इदानीं गत्वा श्वः आगच्छतु" इति उक्तवन्तः सचिवाः।

किन्तु रावणः इदानीम् एव युद्धं भवतु इति आग्रहं कृतवान्। "एवं तर्हि प्रथमम् अस्माभिः सह युद्धं करोतु" इति उक्त्वा

सचिवाः युद्धार्थं सिद्धाः अभवन्।

उभयोः पक्षयोः यदा युद्धम् आरब्धं तदा राक्षसाः अत्युत्साहेन युद्धं कुर्वन्तः कार्तवीर्यार्जुनस्य अनेकान् सैनिकान् हतवन्तः। अवशिष्टान् अनेकान् साक्षात् भक्षितवन्तः। एतस्य युद्धस्य कोलाहलं श्रुत्वा कार्तवीर्यार्जुनः भीताः स्वीयपत्नीः समाश्वास्य, पञ्चशतहस्तैः गदाः घूर्णयन् महावेगेन युद्धक्षेत्रं समागतवान्।

तत्र प्रथमं प्रहस्तः मुसलायुधं चालयन् तस्य मार्गं रुद्ध्वा स्थितवान्। कार्तवीर्यार्जुनः प्रहस्तस्य मुसलं गदाघातेन निवार्य, तम् अपि ताडयित्वा अधः पातितवान्। तदा मारीचः, शुकसारणौ, धूम्राक्षः, महोदरः इत्यादयः तत्र स्थातुम् असमर्थाः भूत्वा दूरं दूरं धावितवन्तः।

अनन्तरं रावणः कार्तवीर्यार्जुनस्य पुरतः आगतवान्। द्वयोः मध्ये घोरं युद्धं प्रवृत्तम्। द्वौ अपि गदाभिः परस्परं ताडितवन्तौ। तथापि द्वौ अपि पर्वतौ इव स्थिरौ सबलौ च आस्ताम्। अन्ते कार्तवीर्यार्जुनः महता बलेन सर्वाभिः गदाभिः यदा युगपत् एव ताडितवान्, तदा सर्वाः गदाः चूर्णीभूताः। तासाम् आघातैः रावणः अस्थिरशरीरः सन् अधः पतितवान्।

तदा झटिति कार्तवीर्यार्जुनः रावणं बद्ध्वा स्वीयां राजधानीं नीतवान्।

एतां वार्तां स्वर्गे स्थितः पुलस्त्यब्रह्मा ज्ञातवान्। सम्भ्रान्तः सः धावन् माहिष्मतीम् आगतवान्। कार्तवीर्यार्जुनः अत्यादरेण भक्त्या च तं सत्कृत्य, तस्य आगमनकारणं पृष्टवान्।

"वत्स, मम पौत्रः सर्वान् लोकान् अपि जित्वा अजेयः इति प्रसिद्धः अस्ति। तादृशम् अपि भवान् जितवान्। भवतः पराक्रमः अतीव श्लाघनीयः अस्ति। अस्तु, इदानीं तं बन्धमुक्तं करोतु" इति उक्तवान् पुलस्त्यः।

कार्तवीर्यार्जुनः कमपि प्रतिवादम् अकुर्वन् रावणं बन्धमुक्तं कृत्वा, अग्निं साक्षीकृत्य तेन सह अहिंसारूपं स्नेहं सम्पादितवान्। अनन्तरं तस्मै वस्त्राभरणादीनि उपायनानि दत्त्वा, तं गौरवपूर्वकं प्रेषितवान्।





# काकतालीयम्

रामः कृष्णः च सहोदरौ। तौ नगरे विद्याभ्यासं समाप्य ग्रामं प्रत्यागतवन्तौ। यद्यपि तौ युवकौ दृढकायौ, तथापि उद्योग-प्राप्त्यर्थं कमपि प्रयत्नं न आरब्धवन्तौ। भोजनं तु गृहे भवति। भोजनानन्तरम् एतौ सम्यक् निद्रां कुरुतः। पुनश्च मित्रैः सह जल्पनं, कुत्रापि कोणे उपविश्य अक्षक्रीडनम्। पित्रार्जिता सम्पत्तिः अस्तीति कारणतः एतादृशम् अलसजीवनं तयोः प्रवृत्तिः जाता। उद्योगान्वेषणे च उदासीनता। 'कदाचित् अन्वेषणं करवाम' इति चिन्तयन्तौ एव कालं यापयतः तौ।

पिता कानिचन दिनानि एतत्सर्वं पश्यन् मौनम् आसीत्। अन्ते एकदा तौ सम्यक् तर्जयित्वा विवेकं बोधितवान्।

तदा रामः कृष्णम् उक्तवान्– "भोः, उद्योगसम्पादनं नाम महते क्लेशाय। प्राप्तस्य उद्योगस्य रक्षणं ततोऽपि क्लेशाय। अस्माकं तु पित्रार्जिता सम्पत्तिः अस्ति। तथापि पिता आवाम् एवं तर्जितवान्। इदानीम् अहम् आत्मरक्षणार्थम् एकम् उपायं चिन्तितवान् अस्मि" इति।

"कः सः उपायः भोः?" इति कुतूहलेन पृष्टवान् कृष्णः।

"आवां प्रातः भोजनं कृत्वा 'उद्योगान्वेषणार्थं नगरं गच्छावः' इति उक्त्वा गृहतः निर्गच्छाव। अनन्तरं ग्रामात् बहिः कुत्रापि सायङ्कालपर्यन्तं निद्रां जल्पनं वा कृत्वा रात्रिभोजनसमये प्रत्यागच्छाव। अस्तु किल?" इति पृष्टवान् रामः।

"उत्तमः उपायः एषः" इति कृष्णः अपि अङ्गीकृतवान्।

अनन्तरदिने प्रातः तौ भोजनं कृत्वा गृहात् निर्गतौ। 'पुत्रौ उद्योगाभिमुखौ जातौ' इति सन्तोषेण पिता आशिषा अनुगृह्य तौ प्रेषितवान्।



गृहात् निर्गतौ तौ ग्रामम् अतिक्रम्य गतवन्तौ। किञ्चिद्दूरं गमनानन्तरं मार्गपार्श्वे स्थितम् एकम् अश्वत्थवृक्षं दृष्टवन्तौ तौ।

"पश्यतु भोः! एतत् तु उत्तमं स्थलम्। निद्रार्थं पर्याप्तमात्रेण छाया अपि अस्ति। इतस्ततः अटनेन वृथा पादवेदना एव किल?" इति उक्तवान् कृष्णः।

"सत्यं किल? एतत्स्थलं किञ्चित् स्वच्छीकृतं चेत् सायंपर्यन्तम् अपि गाढं निद्रां कर्तुं शक्यं स्यात्। स्निग्धा छाया" इति उक्तवान् रामः।

अनन्तरं तौ वृक्षसमीपं गत्वा पतितानि पर्णानि लघुशिलाखण्डान् च दूरे क्षिप्तवन्तौ। महाशिलाः उभौ अपि मिलित्वा दूरं नीतवन्तौ।

तत्समये तेन मार्गेण गच्छन्ती रुद्राम्बा तौ दृष्ट्वा– "किं भोः, सर्वदा ग्रामे कुत्रापि अवकरमध्ये शयानौ भवन्तौ अद्य अत्र आगत्य किम् एतत् कर्तुम् आरब्धवन्तौ? किम् एतत् महत्कार्यम् आरब्धम्?" इति पृष्टवती।

रुद्राम्बा धनिका। किन्तु तस्याः बुद्धिमत्ताविषये बहूनां सन्देहः। केचन तां मन्दबुद्धिं कथयन्ति स्म अपि।

"ग्रामस्य हितार्थम् एव एतत् कार्यम्। अत्र एकः देवालयः निर्मातव्यः इति अस्माकं प्रयत्नः" इति उक्तवान् रामः।

"उत्तमकार्यम् एतत्। परोपकारः खलु पुण्याय! ममापि अत्र भागः भवतु। एतत् सुवर्णकङ्कणं स्वीकुरुताम्। भवतोः प्रयत्नः सफलः भवतु" इति उक्त्वा रुद्राम्बा हस्ते धृतम् कङ्कणयुगलं निष्कास्य वृक्षमूले स्थापितवती। 'चिरं जीवताम्' इति आशिषा अनुगृह्य ततः निर्गतवती सा।

प्रकाशमानं तत् सुवर्णकङ्कणयुगलं दृष्ट्वा रामकृष्णयोः मनसि दुर्भावना समुत्पन्ना।

"एतस्य कङ्कणयुगलस्य मूल्यं न्यूनातिन्यूनं चतुःसहस्ररूप्यकात्मकं भवेत् एव। नगरं नीत्वा एतस्य विक्रयणं कृतं चेत् व्ययार्थं यथेष्टं धनं प्राप्यते" इति उक्तवान् रामः।

"आं, विलम्बः न करणीयः। यतः

एतस्याः रुद्राम्बायाः वचनं श्रुत्वा पिता अत्र आगच्छेत्। अतः प्रथमम् एतत् विक्रीय धनं सम्पादयेम। अनन्तरं पिता यदि पृच्छेत् तर्हि सा न दत्तवती एव इति असत्यं वदेम। मन्दबुद्धेः रुद्राम्बायाः वचने को वा विश्वसेत्?" इति उक्तवान् कृष्णः।

यदा तौ नगरं प्राप्तवन्तौ तदा मध्याह्नकालः। नगरे एकत्र ताभ्यां सुवर्णापणाः दृष्टाः।

रामः कृष्णम् उक्तवान्– "कृष्ण! आवां सुवर्णस्य अद्यतनमूल्यं न जानीवः। अतः अहम् आपणात् बहिः तिष्ठामि। भवान् ग्राहकः इव अन्तः प्रविश्य सुवर्णस्य मूल्यं जानातु। अनन्तरम् अन्यत्र एतस्य विक्रयणं कुर्मः। अन्यथा विक्रयणे वयं वञ्चिताः भवेम" इति।

अनन्तरं रामः सुवर्णकङ्कणयुगलं वस्त्रेण गोपयित्वा आपणस्य पुरतः स्थितस्य गृहस्य वितर्दिकायाम् उपविष्टवान्।

कृष्णः आपणं प्रविश्य– "सुवर्णकङ्कणयुगलम् अपेक्षितम्। इदानीं सुवर्णस्य किं मूल्यम्?" इति आपणिकं पृष्टवान्।

तत्समये सर्वे कर्मकराः भोजनार्थं निर्गताः आसन्। अतः आपणिकः एव स्वयं विविधानि कङ्कणानि प्रदर्शयन्– "भवान् यत् इच्छति तत् सूचयतु। कङ्कणस्य कलानुगुणं मूल्यम्" इति उक्तवान्।

कृष्णः कङ्कणं परीक्षमाणः इव आसीत्। तत्सन्दर्भे उत्तमैः वस्त्रैः भूषितः कश्चन महापुरुषः तत्र आगत्य– "भोः, नूतनविधः कण्ठहारः कोऽपि अस्ति चेत् प्रदर्शयतु।





मूल्य दशसहस्रतः न्यूनं न भवेत्'' इति दर्पेण उक्तवान्।

आपणिकः कृष्णस्य व्यवहारं परित्यज्य सन्तोषेण विविधान् कण्ठहारान् आढ्यस्य पुरतः स्थापयित्वा एकैकस्य अपि गुणवर्णनम् आरब्धवान्।

रुद्राम्बया यादृशं दत्तम् आसीत् तादृशम् एव कङ्कणयुगलम् आपणिकाय प्रदर्शयन् कृष्णः पृष्टवान्– ''एतस्य मूल्यं किम्?'' इति।

आपणिकः तत् कङ्कणयुगलं स्वहस्ते स्वीकृत्य मूल्यं वक्तुं यावत् चिन्तयन् आसीत् तावता सः आढ्यः कोपेन– ''अहं व्यवहारं कुर्वन् अस्मि। माम् उपेक्ष्य अन्येन सह व्यवहरति वा भवान्? एतम् अपमानम् अहं सोढुं न इच्छामि'' इति उक्त्वा वेगेन ततः गतवान् एव।

'उत्तमः ग्राहकः निर्गतः' इति व्यथया परितप्यमानः आपणिकः खेदेन हारम् अन्तः स्थापयन् आसीत्। तत्समये तस्य मुखतः चीत्कारः श्रुतः! यतः पेटिकायां स्थापितः एकः हारः अदृश्यतां गतः आसीत्।

आपणिकस्य चीत्कारं श्रुत्वा समीपे स्थिताः रक्षकभटाः धावन्तः तत्र आगतवन्तः।

तान् दृष्ट्वा भीतः कृष्णः निश्शब्दं ततः पलायनं कर्तुम् उद्युक्तः। तदा रक्षकभटेषु अन्यतमः कृष्णस्य हस्तं गृहीत्वा पृष्टवान्– ''किंनिमित्तं भवान् अत्र आगतवान्?'' इति।

कृष्णस्य मुखतः किमपि उत्तरं न आगतम्। आपणिकः रक्षकभटान् उक्तवान्– ''अहम् एतस्मै कङ्कणानि प्रदर्शयन् आसम्। तदा आढ्यः इव व्यवहरन् अत्र आगत्य कश्चित् चोरः द्वादशसहस्ररूप्यकात्मकस्य मूल्यस्य हारम् अपहृत्य पलायितवान्। हारक्रयणव्याजेन आगत्य कोपं प्रदर्शयन् इव पलायितवान् सः'' इति।

रक्षकभटाः कृष्णं संशयदृष्ट्या पश्यन्तः– ''एषः अपि तस्य चोरस्य साहाय्यकः इव भाति। सुवर्णकङ्कणं क्रेतुम् आगतस्य भवतः समीपे कियत् धनम् अस्ति? प्रदर्शयतु'' इति उक्त्वा वस्त्रेषु शोधनं कृतवन्तः।

कृष्णस्य समीपे एकं रूप्यकम् अपि न आसीत्। अतः ते रक्षकभटाः कृष्णस्य कण्ठं गृहीत्वा गर्जनस्वरेण पृष्टवन्तः– "सः अपरः कुत्र गतः रे? वदतु, तस्य नाम किम्?" इति।

कृष्णः अश्रूणि स्रावयन् प्रवृत्तं सर्वं निवेदयन्– "विनोदार्थं रुद्राम्बां किमपि उक्त्वा, ततः सुवर्णकङ्कणं प्राप्य अग्रजेन सह अहम् अत्र आगतवान्। अहं यदा आपणे मूल्यजिज्ञासया ग्राहकः इव व्यवहरन् आसं तदा काकतालीयम् इव चौर्यं प्रवृत्तम्। आवश्यकं चेत् भवन्तः एतद्विषये मम अग्रजं पृच्छन्तु। अहं तु सर्वथा निरपराधी" इति उक्तवान्।

तत्र रामः आपणिकस्य चीत्कारं रक्षकभटानां प्रवेशं च दृष्टवान् आसीत्। कोलाहलतः भीतः सः केनापि उपमार्गेण पलायितवान् आसीत्। अतः कृष्णः रक्षक-भटैः सह आगत्य यदा दृष्टवान् तदा तत्र रामः न आसीत्। इदानीं कृष्णः असहायः।

"भोः एतस्मिन् अल्पे वयसि एव कथां कल्पयित्वा अस्मान् वञ्चयितुम् उद्युक्तः वा भवान्? आगच्छतु आरक्षकस्थानकम्। तत्र उचितं दण्डनं प्राप्स्यति भवान्" इति उक्त्वा ते रक्षकभटाः कृष्णेन सह रक्षकप्रमुखस्य कार्यालयं प्रति प्रस्थिताः।

अत्रान्तरे रामः इतस्ततः अटन् राजमार्गं प्राप्तवान्। राजमार्गे एकं शकटं गच्छत् आसीत्। त्वरया गत्वा सः तत् शकटम्



आरूढवान्।

शकटे अपरः उपविष्टः आसीत्। सः रामं पृष्टवान्– "कुत्र प्रस्थितः भवान्? शाकटिकस्य अनुमतिं प्राप्य एव आरूढवान् खलु?" इति।

तदा रामः सम्भ्रान्तः सन्– "मम मातुलानी तीव्रम् अस्वस्था। तस्याः चिकित्सार्थं धनं नास्ति। अतः एतत् कङ्कणयुगलं विक्रीय धनं प्राप्तव्यम् इति अत्र नगरम् आगतवान्। मया कस्यचित् सुवर्णापणस्य समीपं गन्तव्यम्" इति उक्त्वा रुद्राम्बया दत्तं कङ्कणद्वयं प्रदर्शितवान्।

शकटे स्थितः सः कङ्कणम् इतस्ततः परिवृत्य परीक्ष्य– "रे, असत्यकथनेन मां वञ्चयितुम् इच्छति वा? एतत् कङ्कणद्वयम् अपि कृतकम्। सुवर्णवर्णेन लिप्तयोः एतयोः

मूल्यम् एव नास्ति" इति उक्त्वा कोपेन तत् कङ्कणद्वयं कुल्यायां क्षिप्तवान्।

रामः क्षणकालं स्तब्धः। अनन्तरं कोपेन– "किं भोः? मम कङ्कणं कृतकं वा भवतु, नैजं वा भवतु। किन्तु तस्य क्षेपणे भवतः कः अधिकारः?" इति पृच्छन् तं ताडितवान्।

तयोः कलहः आरब्धः। अकस्मात् उत्पन्नेन कलहेन शकटस्य समतोलनं व्यत्यस्तम् अभवत्। अतः तौ कलहायमानौ मार्गे पतितौ।

तत्समये रक्षकप्रमुखस्य समीपं कृष्णं नयन्तः रक्षकभटाः तत्रैव आगतवन्तः।

कृष्णः कलहायमानयोः परिचयं प्राप्य– "पश्यन्तु। एषः एव आढ्यः इव व्यवहरन् आपणतः हारस्य चौर्यं कृतवान्। अन्यः मम अग्रजः रामः एव" इति उक्तवान्।

रक्षकभटाः यदा परीक्षितवन्तः तदा आढ्यवेषं धृतवतः कोषे सः सुवर्णहारः लब्धः। "अपहृतस्य हारस्य विभागे प्रवृत्तः कलहः एषः। भवन्तः त्रयः अपि चोराः एव।" इति उक्त्वा ते रक्षकभटाः त्रीन् अपि आरक्षककार्यालयं नीतवन्तः।

तत्र रामः कृष्णः च पुनः अपि प्रवृत्तं सर्वं निवेदितवन्तौ। रक्षकप्रमुखः परीक्षार्थं रामकृष्णयोः मातापितरौ रुद्राम्बां च तत्र आनायितवान्। तेषां साक्ष्येण रामकृष्णयोः निरपराधित्वं सिद्धम् अभवत्।

कृतककङ्कणयोः दात्री रुद्राम्बा रामकृष्णौ उक्तवती– "भवन्तौ मां वञ्चयितुम् इच्छतः इति ज्ञात्वा एव अहं कृतकं कङ्कणयुगलं दत्तवती। ग्रामे देवालयाः अनेके सन्ति। किन्तु एका अपि शाला नास्ति। भवन्तौ तु विद्याभ्यासं समापितवन्तौ। अतः भवन्तौ एकस्याः शालायाः आरम्भं कुरुताम्। तदा नैजं सुवर्णकङ्कणम् एव दास्यामि" इति।

आलस्यस्य फलं प्राप्तम् आसीत् रामेण कृष्णेन च। अतः विवेकं प्राप्य तौ तस्य अश्वत्थवृक्षस्य अधः एव शालाम् आरब्धवन्तौ। एतेन ताभ्याम् अधीता विद्या अपि प्रयोजनकारिणी अभवत्।





# प्रत्युपकारः

कीर्तिसेनः कस्यचित् विशालदेशस्य राजा। तस्य एका एव पुत्री। तस्याः नाम प्रियंवदा। प्रियंवदा न केवलं सुन्दरी, अपि तु विद्यासु निपुणा अपि। सा गुरुमुखतः सर्वाः राजोचितविद्याः श्रद्धया उत्साहेन च पठितवती आसीत्।

तस्याः जन्मसमनन्तरम् एव आस्थानज्योतिषिकेण जन्मकुण्डलीं परिशील्य उक्तम् आसीत् यत् राजकुमार्याः

एतस्याः जीवने सर्पदंशनभीतिः अस्ति। किन्तु दैवबलात् एषा ततः रक्षिता भविष्यति। अनन्तरकाले सामान्यं कञ्चित् परिणेष्यति इति। एतं विषयं ज्ञात्वा राजा राज्ञी च प्रतिदिनम् अपि मनसि एव खेदम् अनुभवतः।

आस्थानज्योतिषिकः ज्योतिःशास्त्रे अतिनिपुणः। अतः राजा राज्ञी इतरे नागरिकाः च तस्य वचनं वेदवाक्यम् इव अङ्गीकुर्वन्ति स्म।

राजकुमारीम् अपायात् रक्षितुं इच्छन् महाराजः एकां योजनाम् उपकल्पितवान्। तदनुगुणं राजकुमारः कश्चित् यावत्पर्यन्तं प्रियंवदां न परिणयेत् तावत्पर्यन्तं परपुरुषस्य दर्शनं यथा न भवेत् तथा व्यवस्था कृता। विद्यागुरुं दासीः च विना कोऽपि तस्याः समीपम् आगन्तुं न शक्नोति स्म।

प्रियंवदा दिने दिने वर्धमाना षोडशवर्षीया जाता। तदा आरभ्य कीर्तिसेनः वरान्वेषणम् आरब्धवान्। यः राजकुमारीं परिणेष्यति सः एव खलु भावी राजा! अतः कीर्तिसेनः 'उत्तमाय राजकुमाराय एव प्रियंवदा दातव्या इति इच्छति स्म।

एकदा प्रियंवदा पूर्णिमायां रात्रौ सखीभिः विना एव एकाकिनी अन्तःपुरसमीपे स्थितम् उद्यानं गत्वा विहरन्ती आसीत्।



तदा तत्र कश्चन सर्पः तस्याः समीपम् आगत्य फणाम् उन्नीय स्थितवान्। प्रियंवदा एतत् न लक्षितवती। सा चम्पकपुष्पस्य गन्धाघ्राणनं कुर्वती आनन्दम् अनुभवन्ती एकं चम्पकपुष्पम् आघ्राय पार्श्वे क्षिप्तवती।

प्रियंवदया क्षिप्तं तत् चम्पमपुष्पं सर्पस्य फणायाः उपरि पतितम्। तेन कुपितः सर्पः फूत्कारम् अकरोत्। चकिता प्रियंवदा पार्श्वे पश्यति – घोरः सर्पः!

भयकम्पितां प्रियंवदां सर्पः अपि क्षणकालम् अपश्यत्। अनन्तरं झटिति प्रियंवदासमीपम् अगच्छत् च। भयभ्रान्ता प्रियंवदा ततः पलायनं कर्तुम् अपि अशक्ता। उच्चैः विकारध्वनिना क्रन्दनं कृतवती सा।

तत्क्षणे एव कश्चन भटः विद्युद्वेगेन आगत्य सर्पस्य पुच्छं हस्ते गृहीतवान्। सर्पम् उन्नीय निर्भयेन परितः भ्रामयित्वा दूरे क्षिप्तवान् च।

सचेतनतां प्राप्ता इव प्रियंवदा कृतज्ञताभावेन तं भटं दृष्टवती। तं सा इतःपूर्वं कदापि न दृष्टवती आसीत्। दृढकायः सः सुन्दरः युवकः।

एतत्सन्दर्भे सः कुतः कथं वा आगतवान् इति न जानाति प्रियंवदा। शिरः अवनमय्य विनयेन स्थितं तं अनन्यदृष्ट्या आसक्त्या च पश्यति सा।

"भवान् कः?" इति पृष्टवती प्रियंवदा।

"अहं भवतां सेवकः। एतस्य उद्यानस्य रक्षणे नियुक्तः अस्मि" इति उक्तवान् सः सेवकः।

राजकुमारी इतःपूर्वं तं दृष्टवती न स्यात्, किन्तु सः भटः तु तां दूरतः बहुवारं दृष्टवान् एव। सः साहसी विश्वासार्हः च अस्ति इति कारणतः एव तं तस्मिन् स्थाने नियोजितवान् आसीत् मन्त्री।

"सुसमये आगत्य मां रक्षितवान् भवान्। अतः भवान् यत् इच्छति तत् ददामि। निःसङ्कोचं वदतु-किम् आवश्यकम्?" इति पृष्टवती प्रियंवदा।

"मम काऽपि अपेक्षा नास्ति" इति उक्तवान् सः भटः।

"निरपेक्षः इति प्रपञ्चे कोऽपि नास्ति।

निस्सङ्कोचं वदतु। भवतः इच्छा यादृशी वा भवतु नाम, पृच्छतु। यतः प्रत्युपकाररूपेण मया यावत् दीयते चेदपि अल्पम् एव। वदतु तावत्'' इति साग्रहम् उक्तवती प्रियंवदा।

तदा भटः उक्तवान्– ''मानवः स्वर्गं देवं वा द्रष्टुम् इच्छेत्। 'मनोरथानाम् अगतिः न विद्यते' इति हि आभाणकम्। तत्सर्वं पूरयितुं को वा शक्नुयात्? अतः मौनं स्थितिः एव वरम्'' इति।

''मया पूरयितुं शक्या इच्छा काऽपि नास्ति वा भवतः?'' इति पुनः पृष्टवती प्रियंवदा।

''सामर्थ्यबाह्या न मम इच्छा। किन्तु भवती मम ताम् इच्छां पूरयेत् चेदपि अहं तत् न अङ्गीकरोमि। यतः भवती पूर्णतः स्वतन्त्रा न'' इति उक्तवान् भटः।

''का सा इच्छा?'' इति कुतूहलेन पुनरपि पृष्टवती प्रियंवदा।

''राजकुमारि! अहं भवत्यां प्रीतिमान् अस्मि। भवतीं परिणेतुम् इच्छामि। किन्तु आवयोः विवाहः असाध्यः खलु? अहं भवतीम् इच्छामि इति यदि महाराजः जानीयात् तर्हि सः मम शिरच्छेदं कारयेत्। अहं तु भवतीम् इव मम प्राणान् अपि इच्छामि एव। यावत् जीवामि तावत् दूरतः एव भवतीं पश्यन् प्राणान् धरामि'' इति उक्तवान् भटः।

भटस्य वचनं श्रुत्वा प्रियंवदा स्तब्धा। तस्याः मनसि इदानीं विचारकोलाहलः–



''भटेन सत्यम् एव उक्तम्। परिणयः मदधीनः। तथापि स्वातन्त्र्येण अहं निर्णयं स्वीकर्तुं न शक्नोमि। एतं विषयं पिता यदि जानीयात् तर्हि एतस्य शिरच्छेदं कुर्यात् इत्यत्र संशयः एव नास्ति। तर्हि मया इदानीं किं वा करणीयम्? यदि भटस्य इच्छां न पूरयामि तर्हि राजकुमार्याः मम जीवनेन किं प्रयोजनम्? वस्तुतः तु एते मम प्राणाः तदधीनाः एव। यदि तस्मिन् समये सः रक्षितवान् न स्यात् तर्हि कुत्र अस्थास्यन् मम प्राणाः?'' इति।

राजकुमारी खेदेन उक्तवती– ''एतावत्पर्यन्तम् अहम् आत्मानं सर्वसमर्थां भावयामि स्म। किन्तु पश्यतु, इदानीं कीदृशी असहायता इति! उपकाराय



प्रत्युपकारं कर्तुम् अपि न शक्नोमि अहम्। मां क्षाम्यतु कृपया'' इति।

''किमर्थं क्षमायाचनम्? मया तादृशः उपकारः कः कृतः? आपद्गतायाः भवत्याः रक्षणं सेवकस्य मम कर्तव्यम् आसीत्। भवत्याः अभिमानः यदि मयि भवेत् तर्हि अहं धन्यः। भवत्याः सम्भाषणेन एव अहं सन्तुष्टः अस्मि'' इति उक्तवान् भटः।

चिन्ताक्रान्ता राजकुमारी ततः गत्वा साक्षात् अन्तःपुरं प्रविष्टवती।

तत्समये तत्र राजा कीर्तिसेनः राज्ञ्या कान्तिमत्या सह वार्तालापं कुर्वन् आसीत्। विषयः तु प्रियंवदायाः विवाहः एव।

'मम आगमनम् एतौ न ज्ञातवन्तौ' इति चिन्तयन्ती सा तत्रैव जवनिकायाः पृष्ठतः स्थितवती।

राजा पत्नीम् उक्तवान्– ''आम्। प्रियंवदा विवाहयोग्या जाता इति तु सत्यम् एव। वरान्वेषणं तु प्रचलति। न जाने, कदा विवाहः भवेत् इति''।

''जन्मकुण्डली कथयति – सा सामान्यम् एव कञ्चित् परिणेष्यति इति। अद्यावधि आस्थानज्योतिषिकेण यत् उक्तं तत् असत्यं न जातम्। एतत् एव मां बाधते'' इति उक्तवती राज्ञी कान्तिमती।

एतस्य श्रवणेन प्रियंवदा ज्ञातवती यत् मम जन्मसमनन्तरम् एव ज्योतिषिकः सूचितवान् – एषा कञ्चित् सामान्यं परिणेष्यति इति। किन्तु मातापित्रोः एतत् सर्वथा इष्टकरं न इति।

''इदानीं तु अहं प्राप्तवयस्का अस्मि। सामान्यः कश्चित् रक्षकभटः मम प्राणान् रक्षितवान्, परिणयेच्छां प्रकटितवान् च। एवं तर्हि जन्मकुण्डलीफलानुगुणम् एव सर्वं प्रचलत् अस्ति।''

प्रियंवदा तद्दिने बहुधा चिन्तनं कृतवती – ''सामान्यः कश्चित् मां परिणेष्यति इति मम जातके लिखितम् अस्ति। जातकफलम् अन्यथा न भवेत् एव। एवं तर्हि प्राणान् रक्षितवन्तं भटं परिणेष्यामि चेत् का हानिः?'' इति।

महता चिन्तनेन अपि भटस्य परिणयः एव युक्तः मार्गः इति विषयः तस्याः मनसि दृढः

जातः।

'एतं विषयं मातापितरौ कथं वा निवेदयामि?' इति बहुधा चिन्तितवती सा।

एवं प्रियंवदा यदा चिन्तयन्ती आसीत् तदा ज्योतिषिकः अन्तःपुरं प्रविष्टवान्। यतः राजा तम् आहूतवान् आसीत्।

कीर्तिसेनः कान्तिमती च ज्योतिषिकेण सह रहसि वार्तालापम् आरब्धवन्तौ। प्रियंवदा अपि रहसि स्थित्वा तेषां सम्भाषणं सर्वं श्रुतवती।

ते चिन्तयन्तः आसन् यत् कश्चित् सामान्यः पुरुषः रहस्यरूपेण आनेतव्यः। तस्य प्रियंवदायाश्चः विवाहः रहसि एव प्रचालनीयः। अनन्तरं सः पुरुषः विषप्रयोगेण खड्गेन वा मारणीयः। एवं जातकफलानुगुणं यथा प्रचलेत् तथा कृत्वा अनन्तरकाले कस्मैचित् राजकुमाराय प्रियंवदां दत्त्वा विवाहकार्यक्रमः सवैभवं निर्वर्तनीयः इति।

एतत्सर्वं श्रुतवत्याः प्रियंवदायाः मनसि एकः तु विषयः स्पष्टः जातः यत् यदि अहम् इदानीं भटस्य परिणये इच्छां प्रकटयेयं तर्हि मातापितरौ तत् सन्तोषेण इव अङ्गीकुरुतः। विवाहानन्तरं तं मारयतः च। केनचित् अपघातेन सः मृतः इति असत्यं वदतः च इति।

सायङ्काले प्रियंवदा एकान्ते तं युवकं भटम् आहूय पृष्टवती– "अहं भवतः नाम प्रष्टुं विस्मृतवती आसम्। किं नाम भवतः?" इति।

"जयः इति मम नाम" इति उक्तवान् सः।

"आवां विवाहितौ भवाव। भवान् मम पाणिग्रहणं करोतु" इति उक्त्वा राजकुमारी हस्तम् अग्रे प्रसारितवती।

"राजकुमारि! एतत् तु मम सामर्थ्यबाह्यम्। मम तु भीतिः" इति कम्पमानेन स्वरेण उक्तवान् जयः।

"भीतिः मास्तु। कोऽपि अपायः यथा न भवेत् तथा एकम् उपायं सूचयामि" इति उक्त्वा तस्य समीपम् आगतवती प्रियंवदा।

(अनुवर्तते)



# समर्थः ज्योतिषिकः

**श्री**निवासपरराज्यस्य आस्थाने ज्यौतिषिकपदवी काचित् रिक्ता आसीत्। समर्थः ज्यौतिषिकः अत्र नियोजनीयः इति महाराजस्य इच्छा। अतः राजा देशस्थितान् सर्वान् ज्यौतिषिकान् स्वकीयम् आस्थानं प्रति आहूतवान्।

परीक्षानन्तरम् आगतेषु पञ्च जनाः ज्योतिःशास्त्रे पण्डिताः इति सिद्धम्। राजा तान् आहूय पृष्टवान्– "भवतां जन्मकुण्डल्यां आस्थानज्यौतिषिकपदव्याः प्राप्तेः योगः अस्ति वा?" इति।

"तादृशः योगः अस्ति इति विश्वस्य एव किल वयम् अत्र आगतवन्तः?" इति पृष्टवन्तः ज्यौतिषिकाः।

इदानीं राजा सन्देहे पतितः। "एतेषु पञ्चसु अहम् एकम् एव आस्थानज्यौतिषिकपदव्यां नियोक्ष्यामि। तदानीम् अवशिष्टानां चतुर्णां वचनं मिथ्या भविष्यति। तेन सिध्यति यत् ते चत्वारः ज्यौतिषे निपुणाः न इति। तर्हि एतेषु समर्थः कः स्यात्?" इति बहुधा चिन्तितवान् राजा।

मन्त्री राज्ञः समस्यां ज्ञात्वा उक्तवान्– "एतेषु कञ्चित् एकं नियोजयतु भवान्। अनन्तरं भवतः सन्देहस्य परिहारं कथयिष्यामि" इति। राजा रामशास्त्रिनामकम् आस्थानज्यौतिषिकस्थाने नियोजितवान्। एतं विषयं मन्त्रिणे सूचितवान् च।

तदा मन्त्री उक्तवान्– "महाराज! एषः रामशास्त्री एव ज्योतिःशास्त्रे महापण्डितः" इति।

"केन आधारेण भवान् एवं वदति?" इति पृष्टवान् राजा।

"महाराज! सत्यं वक्तव्यं चेत् पञ्चानां पाण्डित्यम् अपि समानम् एव। किन्तु रामशास्त्रिणः तु अदृष्टबलम् अस्ति। यतः सः एव किल आस्थानज्यौतिषिकपदवीं प्राप्तवान्। अतः एतस्य सामर्थ्यम् अधिकम् इति अहम् उक्तवान्" इति विवरणं दत्तवान् मन्त्री।





## त्रिगुणितभारयुतः आहारः

किवी शिशुः जन्मानन्तरं मासाभ्यन्तरे ३१० ग्रां भारयुतः भवति। जन्मानन्तरं सः २४ घण्टासु सामान्यतः ८०० कीटान् खादति। एतेन ज्ञायते यत् सः प्राणी स्वशरीरभारस्य अपेक्षया त्रिगुणितभारयुतान् कीटान् खादति इति।

## गभीरा नदी

प्रपञ्चे एव अति गभीरा – चीनादेशे स्थिता यांग्ट्से नदी। पर्वतमध्ये प्रवहन्त्याः अस्याः नद्याः गभीरता ८०० फूटमिता।





## राक्षसमक्षिकाः

२८ फट्दीर्घेण पक्षद्वयेन सहिताः राक्षसमक्षिकाः ३०० मिलियन संवत्सरेभ्यः पूर्वं पङ्कमय्याम् आर्द्रभूमौ सञ्चरन्त्यः आसन्। अतिप्राचीनकाले पक्षिणां जननपर्यन्तम् अपि – तथा च १५० मिलियन संवत्सरपर्यन्तम् अपि – एतादृशाः मक्षिकाः दृश्यन्ते स्म इति श्रूयते।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अग्निपेटिका – Match-box
अङ्गुलीयकम् –A ring
अञ्जलिः – Hollow of the open hands placed side by side
अदृष्टम् – Fortune
अयःशलाका – Iron rod
अर्गलः – Bolt
अवकरभाण्डम –Dust Bin
अवगुण्ठनवस्त्रम्-Veil
आघ्राणनम् – To smell
आभाणकम् – A proverb
आवुत्तः – Brother-in-law
उलूकः – Owl
उष्ट्रः – Camel
कण्डोलः – Basket
कागदम् – Paper
कुञ्चिका – Key
कूपिका – Bottle
कूष्माण्डः – Pumpkin
खनित्रम् – Crowbar
चम्पकपुष्पम् – Champak flower
चित्रकः – Leopard
जल्पनम् – To gossip
जवनिका – Curtain
जिह्वा – Tongue
ज्योत्स्ना – Moonlight
तालः – Lock
तिर्यक् – Obliquely
तैलयन्त्रम् –Oil-mill
दृप्तवृषभः –Bull
दौहित्री – Daughter's daughter
धीवरः – Fisherman
धूलिः – Dust
पुच्छम् – Tail
फणा – Hood (of a cobra)
फेनकम् – Soap
बीजावापः –Sowing
मक्षिका – Fly
मुद्गरः – Hammer
मूलम् – Herb
मृत्तिका – Mud
वाति – Blows
वितर्दिका –Pyol
विभागः – Sharing
व्यत्ययः – Lapse
शृङ्गम् – Horn (of an animal)
सज्जः – Ready
सहजता – Naturality
सिकता – Sand
सीवनम् – Stitching
सौचिकः – Tailor



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां मे-८७ मासे प्रकटयिष्यामः।






*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जनवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **अपत्ये हि ममकारः।**

द्वितीयचित्रम् - **सपत्नेऽपि सहकारः।**

प्रेषकः— एन्.एस्. आचार्यः, श्रीशुकब्रह्माश्रमः, श्री काळहस्ती, चित्तूरु, (आ.प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६.**

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

## Statement about ownership of CHANDAMAMA (Sanskrit)
## Rule 8 (Form VI), Newspapers (Central) Rules, 1956

| | |
|---|---|
| *1. Place of Publication* | ... 'CHANDAMAMA BUILDINGS'<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | ... MONTHLY<br>... 1st of each calendar month |
| *3. Printer's Name* | ... B.V. REDDI |
| *Nationality* | ... INDIAN |
| *Address* | ... Prasad Process Private Limited<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | ... B. VISWANATHA REEDI |
| *Nationality* | ... INDIAN |
| *Address* | ... Chandamama Publications<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | ... B. NAGI REDDI |
| *Nationality* | ... INDIAN |
| *Address* | ... 'Chandamama Buildings'<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | ... CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. B.VENKATRAMA REDDY<br>2. B.V.SANJAY REDDY<br>3. B.V.NARESH REDDY<br>4. B.PADMAVATHI<br>5. B.VASUNDHARA<br>6. B.V.SHARATH REDDY<br>7. B.N.RAJESH (Minor)<br>8. B.L.ARCHANA (Minor)<br>9. B.L.ARADHANA (Minor)<br>(All Three Minors admitted to the benefits of Partnership) |

I, B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

**B. VISWANATHA REDDI**
*Signature of the Publisher*

*1st March 1987*

No society gossip,
no sensational blow-ups, yet...

# Nearly 70% of Heritage readers fall in the upper income group of over Rs 2000 per month. Two thirds are male. The average age is 28 years.

– from an IMRB survey conducted in Oct.1986



It's an unusual magazine. It has a vision – for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families, are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?

CMP.2149



## THE HERITAGE



**So much in store, month after month.**